मानुबन्धाः। ५९-६०. जनी जॄष् क्नसु रञ्जोऽमन्ताश्च। जनीति निर्देशः परमतानुवादार्थ एव—जनयति जन्यं भगवान्, जरयति जनमयोग्यचिन्ताभावः, क्नसयति कान्त्या भवनोदरं कलानिधिः। रञ्जेर्मृगरमण एव—रजयति मृगानाखेटिकः, रमयति रमणीयता रामां, भ्रमयति चक्रं चक्रपाणिः। ६१-६४. ज्वल ह्वल ह्मल नमोऽनुपसर्गा वा—ज्वलयति ज्वालयति वा जातवेदसं यायजूकः, ह्वलयति ह्वालयति ह्मलयति ह्मालयति वनितां वातः, नमयति नामयति वा पल्लवं वायुः। सोपसर्गत्वे नित्यं प्रज्वलयतीत्यादि। ६५-६८. ग्ला स्ना वनु वमश्च। एते अनुपसर्गाः सन्तो मानुबन्धा वेत्यर्थः—ग्लपयति ग्लापयति वा आतुरं चिराय रोगः, स्नपयति स्नापयति वा बालां माता, वनयति वानयति वा धनं भृत्यं स्वामी गमयतीत्यर्थः, वमयति वामयति वाजीर्णमौषधेन भिषक्। सोपसर्गत्वे प्रग्लापयति प्रस्नापयति उद्वनयति उद्वमयति। ६९-७१. न कम्यमिचमः। अमन्तत्वात् प्राप्ते प्रतिषेधः—कामयति तपस्विनमप्सरोभिरिन्द्रः, आमयति आतुरं रोगेण दुर्दैवं, आचामयति पानीयं गां गोरक्षकः। ७२. शमोऽदर्शने—शमयति रोगं पथ्याशिता। अदर्शन इत्येव—निशामयति रूपं कामिनी, यूनः दर्शयतीत्यर्थः। केचित् नञ्वृत्तिमिच्छन्तो विपरीतमुदाहरन्ति। ७३. यमोऽपरिवेशने (पणे, रमा)। परिवेशनं अन्नादेरुपसमर्पणं—नियमयति राजा दुर्वृत्तान्, परिवेशने तु—यामयति श्राद्धे ब्राह्मणेभ्योऽन्नादिकं पत्न्या दानपतिः। नञ्वृत्तौ विपरीतमुदाहरणं। ७४. स्खदिरवपरिभ्यां च। स्खदयति अवस्खदयति परिस्खदयति पक्षे वादी स्थिरयतीत्यर्थः। नियमः किं—प्रस्खादयति, नञ्वृत्तौ विपरीतमुदाहरणं। ७५. फण गतौ। अस्मिन्नर्थेऽयं धातुर्मानुबन्धश्च—फणति फणी विवरं, फणयति तं विषवैद्यः। गतेरन्यत्र फाणयति फाण्टम् अनायासेन जनयतीत्यर्थः। वृत्॥ वृत्करणं घटादयो मानुबन्धा इति परिच्छेदार्थं। एते पञ्चविंशतिः परस्मैभाषाः॥ ज्वरप्रभृतयः फणपर्यन्ताः परस्मैपदिन इत्यर्थः। ७६. राजृ दीप्तौ—राजति-ते राजानमुपनाथन् उभयतोभावः। अयमुभयपदीत्यर्थः। ७७-७९. टुभ्राज टुभ्राश (श्ट, रमा) टुभ्लाश दीप्तौ। भ्राजते भ्राशते भ्लाशते भं नभसि। भ्राशभ्लाशोः पक्षे यन् आत्मनेभाषाः। एते त्रय आत्मने-

पदिन इत्यर्थः । केचिदमीषां ऋदनुबन्धत्वमाहतवन्तः, तद्विद्वासम्मतं । भ्राजादीनां प्रतिपदमेव ह्रस्वविकल्पविधानात्—अवभ्राजत् अविभ्राजत् अवभ्राशत् अबिभ्राशत्। भ्नाशेस्तु अवभ्नाशदित्येव। भ्राजथुरित्यादि टुनुबन्धत्वात्। ८०-८२. स्यमु स्वन ध्वन शब्दे—स्यमति स्वनति ध्वनति वा शङ्खः संग्रामे, स्येमतुः सस्यमतुः। दण्डकपठितस्य ध्वनेरिह पाठोत्यकिञ्चित्कर इत्यस्माकं। केचिद् ध्वनितं तम इत्यपीच्छन्तो व्याचक्षते स्वनिसहचरितस्यैव ध्वनेरिडभावो नान्यस्येति। एतत् तु वाजिविषाणधनुषो महार्घतासाधनसाधीयो धीमतां मतिरतिदूरमेव नाव-मन्यते। ८३-८४. षम ष्टम वैक्लव्ये—समति स्तमति वा शोकेन कातरः। ८५. ज्वल दीप्तौ—ज्वलति वह्निस्तृणपुञ्जे, ज्वालः, ज्वलः। ८६. चल कम्पने—चलत्यम्बरं वातेन, चालः, चलः। ८७. जल धान्ये। धीयते जीवोऽनेनेति धानं, तस्य भावः जीवनोपयोगिक्रियोच्यते—जलति जनान् जीवयतीत्यर्थः। धीयते आच्छाद्यतेऽनेन तस्य भाव आच्छादनक्रिया—जलति जालेन मत्स्यान् जालिकः। धान्य इति केचित् घनीभवने, जडं जलं जालं। ८८-८९. टल ट्वल वैक्लव्ये—टलति ट्वलति वा कालेन त्रिभुवनं। ९०. ष्ठल स्थाने—स्थलति जलापगमे जलप्लुतं पुलिनं, स्थलं-ली, स्थालं। ९१. हल विलेखने—हलति खिलं सीरेण कृषकः, हलं हला हालाहलं। ९२. णल गन्धे—नलति नलिनं नलिन्याः सुगन्धीभवतीत्यर्थः, नडः-लः, नाला-लं, परिणलति। ९३. वल प्राणने—वलति प्राणेन धान्यं जीवतीत्यर्थः। ९४. पुल महत्त्वे—पोलति पुलिनं शरत्काले महद्भवतीत्यर्थः। ९५. कुल संख्याने बन्धुषु च—कोलति कुलालः कुम्भान्, गणयतीत्यर्थः, कोलति कुलीनः, सर्वेषां बन्धुर्भवतीत्यर्थः बन्धुषु ज्ञातिषु वर्तमानोऽन्यत्राप्रयोगो गण्डवदिति केचित्, कुलं कोलः। ९६. हुल हिंसासंवरणयोः—होलति पादतले कोमलाङ्गीं धान्यशूकः, हुलं होलः। होलति कलानिधिं मेघः, संवृणीते इत्यर्थः। तुल इति केचित्, तु इति चापरे। ९७-१००. पल शल पत्लृ पथे च गतौ। हुलिरपि गतौ चकारात्—पलति शलति पतति पथति पत्रं वृक्षात्, पलं पन्थाः। १०१. क्वथे निष्पाके—क्वथति भिषगौषधफलकं निष्पचतीत्यर्थः, क्वथः क्वाथः। १०२. मथे विलोडने—

मथति दधिकुम्भमाभीरनारी, मथः माथः। १०३. टुवम उद्गिरणे—वमति वातकी भुक्तमन्नं। केचिदमुमुदनुबन्धं पठन्ति। तन्मते इडभावः, अस्माकं तु वमित इत्येव, अनिट्प्रयोगस्तु यथाकथञ्चित् आगमस्यानित्यत्वात्, वामकः वमः वामः। १०४. भ्रमु चलने—भ्रमति भ्रम्यति वा भ्रमरः, मिथ्याज्ञानेऽपि भ्रम्यति रजन्यां सुप्तिकथा। अशमादित्वात् न दीर्घः, अतएव विकल्पितो यन्, अन्यथोभय-पाठादेव उभयरूपसिद्धेः। बभ्रमतुः केचिदमुष्य एत्वमभ्यासलोपो नेति मन्यन्ते भ्रेमतुरित्यादि, तथा च भ्रेमुर्वल्गुरित्यादि, भ्रमः भ्रान्तिः। १०५. क्षर संचलने—क्षरति लक्ष्यादलक्षितस्य शरः। परस्मैभाषाः। १०६. षह मर्षणे—सहः साहः। विकल्पे नन्तेषु परस्मैपदिषु पाठात् सहतीत्यपि क्वचित्, तथा च प्रयोगः—सहति कलभेभ्यः परिभवं। १०७. रमु क्रीडायां—रमते बाला रेवत्या। आत्मनेभाषौ। १०८. षद्लृ विशरणगत्यवसादनेषु। विशरणं हिंसा गति-र्देशान्तरप्राप्तिः, अवसादनमाकुलाभावः स्थितौ अव (प्र?) सन्नभावे च—प्रसीदति वासुदेवो भक्तप्रीत्या। १०९. शद्लृ शातने। शातनमिह पातनं—शीयते पत्रं पवनो वृक्षात्, शीयते पत्रं वृक्षादित्यपि पतनं पातनं चास्य स्वार्थः। शशाद अशीशतत् शद्रुः शदः शादः। ११०. क्रुश आह्वाने—क्रोशति रुषा कषायितो हि शत्रुः, क्रुशः क्रोशः। १११. कुच संपर्चनकौटिल्यप्रतिष्टम्भविलेखनेषु—संकोचति कमलं रविरश्मिविगमे, प्रतिष्टब्धं भवतीत्यर्थः। अस्मिन्नेव प्रायो वृत्तिरुदाहरणं च। ११२. बुध अवगमने—बोधति बुद्धिमान् सकलशास्त्रं। ११३. रुह जन्मनि प्रादुर्भावे—रोहति केदारे यवाङ्कुरः। आङ्पूर्वोऽसौ आक्र-मणे वर्तते, अवपूर्वोऽधःपतने। ११४. कश गतौ—कशति काश्मीरं वणिक्। निमूलसमूलयोः कशः निमूलकाशं कशति, सर्वकुलाभ्रकरीषेषु कशः इति सर्वं-कश इत्यादि। वृत्। ज्वलादिसमाप्त्यर्थं वृत्करणं ते पुनस्त्रिंशत्।

१. हिक्क अव्यक्ते शब्दे—हिक्कति-ते कलभः, अव्यक्तं ध्वनति तरुण-हस्तीत्यर्थः। २. धावु गतिशुद्ध्योः—धावति-ते चोरो रणे रणोत्सुकः। सामान्यपठितस्यापि विशेषे वृत्तिरभिधानात् -धावति वासो धौतकारः शोधय-तीत्यर्थः, धावति ताम्रमम्लेन शुध्यतीत्यर्थः। ३-४. अनु्षु व्यय गतौ—

अञ्चति-ते व्ययति-ते वाराणसीं तीर्थिकः। केचिदिह अचु गताविति पठन्ति—अचति-ते। ५. अस दीप्त्यादानयोश्च, चकाराद् गतौ—असति-ते खद्योतस्त-मिस्रायां। धातूनामनेकार्थत्वात् सत्तायामपि, तथा च—लावण्यमुत्पाद्य इवास यत्न इति। ६. वेणृ ज्ञानचिन्तानिशामनेषु च, चकारात् प्रकृतायां गतौ—वेणति-ते वैणविको वेणुं, वादयितुं जानातीत्यर्थः, वेणी। ७. टुयाचृ याच्ञायां। याच्ञा दातुं प्रेरणा—याचति-ते चमूरुनयनां रतिं मानदः। ग्रहीतुं प्रेरणायामपि—याचति वित्तं गुरवे शिष्यः। याचथुः डुनुबन्ध इति केचित्, याचित्रिमं। ८. रेटृ परिभाषणे—रेटति-ते वद्धवयस्येन, मिथ आलापयतीत्यर्थः। ९-१०. चते चदे याचने च। चकारात् परिभाषणे—चतति-ते चदति-ते वा विद्यां गुरुमभियुक्तः, चतुरः चत्वारः चातकः। ११. प्रोथृ पर्याप्तौ—प्रोथति-ते प्रोथं वराहस्य भद्र-मुत्तमुत्पाटयितुं। १२-१३. मिदृ मेदृ मेधाहिंसयोः—मेदति-ते दीनमसाधुः हिनस्तीत्यर्थः। मेधायां मेदति शास्त्रार्थं मेधावी, धारयतीत्यर्थः। १४. मेधृ सङ्गमे च। चकारात् पूर्वयोः—मेधति-ते मित्रं मित्रेण, संगच्छत इत्यर्थः, मेधा मेधिः। १५-१६. णिदृ णेदृ कुत्सासन्निकर्षयोः—नेदति-ते दयालुः कापटिकं। १७-१८. शृधु मृधु उन्दे—शर्धति-ते मर्धति-ते वा मूर्धा तैलेन क्लिद्यतीत्यर्थः, शृधुः मृधुः मृधः मृधा। १९. बुधिर् बोधने—बोधति-ते बुधः। बुध अवगमने इति पूर्वपठितस्य प्रयोजनं मतान्तरे कर्त्रभिप्राये परस्मैपदं। केचित् पुनर्गत्यर्थस्य अबुधत इत्यादिप्रयोगनिरासार्थं। २०. उबुन्दिर् निशामने। निशामन-मालोचनं प्रणिधानमिति यावत्—बुन्दति-ते वास्तविको ग्रामकार्यं, बुद्धः। २१. खनु अवदारणे—खनति-ते खातं कौद्दालिकः, चख्ने खायकः, शिल्पी चतुः खनकः। २२-२३. झष चीवृ आदानसंवरणयोः—झषति-ते जालिकः झषान् आदत्ते संवृणुत इत्यर्थः, चीवति-ते वल्कलं वानप्रस्थः गृह्णाति परि-दधाति वेत्यर्थः। २४. चायृ पूजानिशामनयोः—चायति-ते प्रतिमां माङ्गलिकः पूजयति निशामयति वेत्यर्थः। २५-२६. दासृ दाशृ दाने—दासति-ते दाशति-ते वा समुद्रं दानपतिः, दाशो दानपात्रं। २७. भेष भये। भेषति-ते वृकेभ्यो भीरुः। २८. भ्रेषृ चलने—भ्रेषति-ते विरुद्धवादी न्याय्यपथात्। २९. पष

बाधनस्पर्शनयोः—पषति-ते पीडा आतुरं। स्पष इत्येके, तालव्योऽयमित्यपरे। ३०. लष कान्तौ—अभिलषति-ते विलासी कामिनीं, पक्षे यन्। ३१-३२. चष भक्ष भक्षणे—चषति-ते भक्षति-ते बुभुक्षुरोदनं। भ्लक्ष इत्यपरे। ३३. कष हिंसायां—कषति-ते दिवसे उलूकं काकः; विकाषी, विकष्वरः, तत्र कश गतावित्यपरे। ३४. माह माने—माहति-ते महीतले न यशो यशोधनस्य। उदनुबन्ध इत्यपरे। ३५. गुहू संवरणे—निगूहति-ते परदोषं गुणवान्। ३६. हृञ् हरणे। हरणं देशान्तरप्रापणं—हरति-ते भारं ग्रामं भृत्यः। अपनयनमात्रेऽपि—हरति चौरो धनं। पादहारक इति कर्मणि नूपुर उच्यते, कवचहरः, दृतिहरिः, नाथहरिः। ३७. भृञ् भरणे। भरणमिह पोषणं पूरणं वा—भरति -ते भृत्यं स्वामी, भरति कुम्भं भृत्यो वारिणि। ३८. अलञ् भूषणपर्याप्तिवारणेषु—अलति-ते बालामभिसर्तुं सखी, भूषयति निवारयति वेत्यर्थः। पर्याप्त्यावकर्मकोऽयं—अलति बाला वल्लभमभिसर्तुं। ३९. धृञ् धारणे—धरति-ते धरां धराधरः, पतितुं न ददातीत्यर्थः। ४०. णीञ् प्रापणे—नयति-ते नायकः परबलमनुक्षणं क्षयं। प्रपूर्वोऽयं करणे—प्रणयते शास्त्रं मुनिः, विपूर्वोऽयं शिक्षायां—विनयते शिष्यं गुरुः, उपपूर्वोऽयं वेदधारणायां—उपनयते पुत्रं पिता, अपपूर्वोऽयं खण्डने—अपनयते क्रोधं साधुः। ४१. दान अवखण्डने—अवदीदांसति-ते परपक्षं वादी। केचिदार्जवे सनमिच्छन्ति—दीदांसति दारु वर्धकिः, ऋजूकरोतीत्यर्थः, दीदांसयति, दीदांसिषति। ४२. शान तेजने—शीशांसति-ते खड्गं कर्मकारः। अवदानयति निशानयतीति कश्चित्, अस्माकं तु दा अवखण्डने शो तनूकरण इत्येताभ्यां युडन्ताभ्यां साधनीयं। ४३. डुपचष् पाके। पाक इह विक्लित्यनुकूलो व्यापारः—पचति-ते तण्डुलान् सूपकारः, पाक्यः, पचेलिमः, पचः, पक्त्रिमः, पचा। ४४-४५. भज श्रिङ् सेवायां—भजति-ते कृष्णं योगी, श्रयति-ते वा। ३६. रन्ज रागे। राग इह वर्णान्तरापादनं आसक्तिर्वा—रजति-ते वस्त्रं कुसुम्भेन रजकः, रजति रमायां रमणः आसजतीत्यर्थः, रजनी रज्जुः। ४७. शप आक्रोशे। आक्रोशो गालिदानं—शपति-ते शिशुमसहनः। शपथे शप इत्यात्मनेपदं—शपते आत्मानं देवदत्ताय

कुमारो। ४८. त्विष दीप्तौ—त्वेषति-ते वा तपनस्तपागमे। दाननिरसनयोरप्ययमित्येके। ४९. यज देवपूजासङ्गतकरणदानेषु—यजति-ते देवान्, यजति सज्जनं साधुः मित्रीकरोतीत्यर्थः—यजते पशुना रुद्रं, रुद्राय पशुं ददातीत्यर्थः। ५०. डुवप् बीजतन्तुसन्ताने—वपति-ते बीजं क्षेत्रे कृषकः, वपति वस्त्रं तन्तुवायः, उप्तिमः, वप्रः। ५१. वह प्रापणे—वहति-ते गाणां ग्रामं गौः, वह्यं, शकटं। ५२. वेञ् तन्तुसन्ताने—वयति-ते तन्तुं तन्तुवायः, विवासति, वावायते। ५३. व्येञ् संवरणे—संव्ययति-ते वसनेन जघनं युवतिः, समव्यासात्। ५४. ह्वेञ् स्पर्धायां शब्दे च। स्पर्धा अन्यान्यमभिभवः परिभवेच्छा वा—आह्वयति-ते मल्ला मल्लं परस्परं अभिभवतीत्यर्थः, आह्वयति दूरादाखेटिकः, आकारयतीत्यर्थः, जुहूषत, जाहूयत। उभयतोभाषाः। हिक्कादयो ह्वेञ्पर्यन्ता उभयपदिन इत्यर्थः; ह्वेञ्प्रभृतयः समाहारानुबन्धा न स्वीक्रियन्ते मुनिभिः तदनुरोधादेव भाषायां ञकारकरणं प्रपञ्चितमाचार्यपादैरित्याधेयं। ५५. वह व्यक्तायां वाचि—वहति विद्वान् सूनृतं मित्राणि। ५६. वस निवासे—वसति साधुः सज्जनसमाजे, वास्तव्यः। केचिदमुं वदेः पूर्वं पठन्ति। ५७. टुओश्वि गतिवृद्ध्याः—श्वयति श्वा पिण्डमत्तं, श्वयति शशी शुक्लपक्षे अनुदिनं, शुशावयिषति, शिश्वाययिषति, श्वा। वृत्। वृदिति गणसमाप्त्यर्थं परस्मैभाषाः। वदवसश्वयः परस्मैपदिन इत्यर्थः। इति दुर्गसिंहोक्तगणवृत्तौ उत्सर्गिकानुविकरणा भ्वादयः समाप्ताः।

(१) सत्तावृद्धिविशुद्धिसिद्धिशयने स्थानासने भाषणे लज्जाजीवनरोदने च हदने नृत्ये विलासे क्रुधि। ग्रासस्पन्दनिवासशोषमरणस्पर्धाविहारेष्वपि ज्ञातौ धातुरकर्मकः चयमदोद्वेगप्रकम्पेष्वपि। (४) अनेनैव अच्युतो रामेण व्युत्पादितः। (१०) गतिरिहोत्तरदेशनं योगोऽर्थो न तु तत्फलस्पन्दी गौरवादिति मण्डनः अन्यस्तु स्पन्दविशेष इत्याह। (२७) अयं त्यादीन् नोत्पादयतीति धातुपारायणं। (२८) भट्टौ तु त्यादावपि विकल्पो दर्शितः, प्रणिनिन्दिष्यति नो भूय इति धातुप्रदीपः। (३०) ह्लादनं सुखं। (३१) तुदि चेति दामोदरः, तुन्दति तुन्दं। (३६) शुचीकरणं वा योगात् शुन्धति सत्येनेति हलायुधः। (३७) फक्कति खलः खञ्जो वा असद् व्यवहरति, शनैर्गच्छति। (५१) ईङ्खति नायमस्तीत्यन्ये। (७५) ओष्ठ्योऽयं वकार इत्येके। (७६) चाद वर्जने चेति गोविन्दभट्टः। (७८) मघि मण्डने इत्येके। (८९) म्लुनत्तु। (९५) ग्लोचति गत्यर्थमपीमं केचित् पठन्ति। (१०३) आकर्षणमिति भट्टमल्लः आञ्छति धनुर्वीरः। (१०६) मुमूर्छ सख्यं रामस्य। (१०८) पवर्गपञ्चमादिरिति त्रिलोचनः। (११०) रामस्तु विवाशी लोप इति आचष्टे; विपाश इति पाठे विपाशो बन्धनमिति बोपदेवः। (११८) अर्ज अर्जनमलब्धस्य लाभ इति

न्यासः। (१२५) जङ्गलं। (१२७) कुत्सितं तोजति कुतुकं। (१४१) मुजि मुञ्जति मुञ्जः गजि गञ्ज इत्येके सुरभि गंजगञ्जनीयोसीति गोवर्धनः। (१४५) निपातनात् योतकमिति त्रिलोचनः। (१४६) चित्तसंमोह उन्मादनं मेडृ इति केचित्, आम्रेडितं। (१५२) विशरणं विभेद इति रामः। विसरणं विकास इति चतुर्भुजः। अस्यापि गोविन्दभट्टेन घटा प्रतिपादिता। (१५९) भृतिरिह पोषणं, कर्ममूल्यमिति गोविन्दभट्टः। (१६१) काङ्क्षायामिति गोविन्दभट्टः, आह च काङ्क्षा व्यथानुभवः अभिलाषोऽपीति केचित्। (१६२) नृतिर्नर्त्तनं। (१७२) कट—तुर्यस्वरा अन्योऽयमित्येके·····एतदनन्तरं ईठ विबाधाया-मित्येके। (१७७) टवर्गप्रथमान्तोऽयमिति धातुप्रदीपः, कुण्ठति। (१७९) चुटि इत्येके। (१८४) उकारशून्यः स्फट इति पठन्ति अस्मात् स्फटा फणा इति सुभूतिः। (१८६) स्थौल्यमङ्कुर्बुद्धिः (क) र (ब?) ठ इति मैत्रेयः। (२०१) भाव एवास्पदं लब्ध्वो विकारी हाव उच्यते इति साहित्यदर्पणः। (२०२) समन्ताद्द योग इति गोविन्दभट्टः। (२०३) क्रीडते नागराज इति हड्डचन्द्रलिखितकेऽपपाठः। (२०७) कत् कर्कशं जलमिव कज्जलं। (२०८) यन् महिमाप्याह नाम्नः सत्यप्रधानस्य धातुकारोऽङ्ग एव हि। शब्दचक्रेकदेशादि धात्वर्थत्वमबोचत इति, क; यत्र यत्र द्रव्यनिर्देशस्तत्रतत्र तत्समवेता क्रिया लक्ष्यत इति रचितव्याख्या, ख। (२१७) दन्त्यादिरित्येके। च इत्युणादौ दुर्गसिंहः सचति तुन् सक्तवः। (२२७-९) षिभु षिम्भु इत्येके सेभति सिम्भति। भर्भति पवर्गचतुर्थान्तोऽयमिति रामः। अकारान्तोऽयमिति भारद्वाजीयाः। (२३०) शुभ शुम्भ। शोभति नायमस्तीति केचित्। भासने द्वाविति रामः। तच्चिन्त्यं दन्त्यादी इति द्राविडाः। (२४०) सर्वति मूर्धन्योपदेशोऽयं। (२४५) अर्दनमिह हिंसा याचनमित्यपरे। (२५०) अण परीचार्या अवणतुः अवणुरित्युदाहृतं मैत्रेयेण, तच्चिन्त्यमिति वर्णदेशना, वस्तुतस्तु दन्त्योष्ठ्यादिरप्ययमिति वोपदेवः। (२५७)—श्रोणृ श्लोणृ संघाते। श्रोणति श्रोणिः। श्लोणति धनमुद्योगो स्तूपयतीत्यर्थः। तडृ तोडने—तोडति मल्लो मल्लाङ्गं भनक्तीत्यर्थः। तोडनं द्विधाकरणमिति गोविन्दभट्टः। (२६१-२६२) रौडृ लौडृ स्थाने रौडृ लौडृ इत्येके। (२६४) वन धातुरत्रापीति धातुप्रदीपः। (२६५) चचाम मधु माध्वीकं। (२७१) पञ्चमस्वरानुबन्धोऽयमिति धातुप्रदीपः। (२७८) हर्य क्रान्तौ (क्लान्तौ, ख) च, क। (२८०) (अत्र मविर्न पठ्यते रमानाथेन प्राक् पठिष्यत इति)। (२८१) पराभ्युदयासहिष्णुत्वमीर्ष्या भार्यादि दोषाद्यसहनत्वमिति कश्चित्। (२९१) प्रतिष्टम्भो जडीभावः—पोलति शिग्रुः। (२९७) अन्तःप्रकाशनमिति गोविन्दभट्टः। (३००) वाल्मीकिः फलति स्म यस्य चरितस्तोत्राय दिव्या गिरः। (३०३) हावकरणेऽप्ययमिति धातुप्रदीपः। (३१२-४) वेल्लति। नायमस्तीति दुर्गत्रिलोचनौ।·· ···तिल्ल इत्यपि केचित्। (३१८) श्वल। श्वल इति चान्द्राः। (३२०) खोर्ऋ इत्येके। (३२३) दीर्घोपधोऽयमिति गोविन्दभट्टः धौवति। (३२४)* पञ्चम्याः प्रथमपुरुषस्यैकवचनबहुवचने भाषायामस्य नाभिधीयेते। तत्र च प्रयोगोऽस्ति त्वन्योरेवेति संप्रदायः। भाष्यादावनुक्तत्वात् न तत् सङ्गच्छत इति शरणदेवः। किन्तु तुस्थाने तातङ् दृश्यते भावगम्यनयः कोऽपि जयताद्द वाग्गोचरः। द्विवचने तु "बाहू प्रियाया जयतां मृणालमिति" नैषधं। (३३५) प्राणधारणे अत्रपाठस्तु कुसम्प्रदायविजृम्भितं। (३४०) ऊर्वति नामिनो र्वोरित्यादिना दीर्घः लक्ष्यस्थित्या क्वचित् न भवति अपि उर्व इति गोविन्दभट्टः। (३४८) ह्रस्वमध्यः पवर्गीयवकारः अमरादिषु पाठात्। (३६५)

* बधिरन्ध्यान्तुमतन्तृभिः प्रयोगो नाभिधीयते। जयते नास्ति पञ्चम्या उत्तमः क्वचित् इति दशबलकारिका।

अस्यैव घुघृणं व्युत्पादितं वर्णदेशनायां। (३६९) दन्त्योपदेशोऽयमिति गोविन्दभट्टः। (३७१) अत्रानन्तरं "मच संघाते," मच इत्येके मचिका, तच त्वचने त्वचनं संवरणं—तचति कार्यं वर्मणा भटः। (३७२) पच्यं इति क्षीरस्वामी दन्त्योपदेशोऽयमिति गोविन्दभट्टः। (३८०) चूषा वरत्रा। (३८४) दन्त्योपदेशोऽयमिति क्षीरभट्टः, तालव्यादिरपीति वोपदेवः। (३९८) अन्तस्थादिरिति वर्णदेशना। (४०३) अनिट्सूत्रे विषिः सामान्येन गृह्यते इति टीकाकारः, अतः पञ्चमस्वरानुबन्धो नास्तीति लक्ष्यते। (४०६) अयमोष्ठ्यादिरिति काशीखण्डे गङ्गासहस्रनाम्नि व्याससमयः 'वृष्टिकर्त्री वृष्यजला विधिर्विच्छिन्नबन्धना इति। (४१६) अर्लीके। अयमेव पाठो गोविन्दभट्टसंमतः। (४२२) जत्सं। (४३१) पेसृस्थाने वेसृ इत्येके वेसरः। (४४०) इहि इंहति अनुबन्धशून्योऽयमित्येके दर्हति। (४४१) शब्देऽप्ययं वृंहितं करिगर्जायां शब्दमात्रेऽपि कथ्यते इति शब्दमहार्णवः। (४४३) एकारान्तानामाकारान्तत्वं कृत्वा दिवादौ पाठे सिध्यत्यपि प्रयोगे भ्वादिपाठ एव ज्ञापयति गणकार्यमनित्यं अतो विकरणानुत्पत्तौ अयधातोरात्मनेपदानित्यत्वात् व्यो व्यंञ्जनेऽय इति यलोपे एव कालः समुत्पन्नो यः पलाति स जीवति इति सिद्धमित्याह, अन्ये तु स्वरभेदार्थमाहुः। (४४८) विनाम: कान्तिक्षय इति गोविन्दभट्टः। (४५५-५६) शब्दसंघातयोः। संघातः समूहः शब्दसंघातयोर्धात्वोःस्त्यायतीति भट्टमल्लः। (४५७) स्थिरीभवनमिति भट्टमल्लः। (४६०) अषोपदेशोऽयमिति भीमः। (४६५) षो नपरः षोपदेशोऽय-मिति धातुप्रदीपादयः। (४७०) अग्निफुत्कृतौ च। (४७६-४७७) आह मणिकण्ठः प्रयत्नविशेषश्चिन्ता ज्ञानविशेषः स्मृतिः। भेदानादरणादिकार्यतोक्ता। (४७८) वरणे। वरणं स्वीकारः स्थगनं चेति गोविन्दभट्टः। (४७९) स्रु। (४८४) स्वादिपाठ एव सिद्धावस्य भुवादिपाठः श्रुवः शृचेत्यस्यानित्यत्वं बोधयति, तेन लिङि श्रवेत इति पारायणिकाः। श्रवति राक्षसनिस्वनसाहृत इति योगश्च। (४८५) तालव्यादिरयं। (४९२) मूर्धन्यवर्गतृतीयान्त इत्येके। (४९४) वर्ग्यादिरयमित्येके। (४९७) गताविति इत्येके। (४९८) जयत्येवं विजयते जयत्यभिभवत्यपीति भट्टमल्लः।

(२) ऊष्मचतुर्थमध्य एव पाठः। कवर्गचतुर्थमध्यस्तु शङ्कां जनयति स्पर्धावर्षणयोरुक्तः संघर्षः शब्द-वेदिभिरिति व्याडिः। (४) विलीटने। विलोडने इत्येके। (६) स्कुदि। (७) श्विन्दते श्वेतते वीणि स्युः शुक्लत्वेऽवदायतीति भट्टमल्लः। (१०) जाड्येऽपि चान्द्रादयः। (२०-२१) वृत्तिकारस्तु दीर्घं विदधाति कूर्दते खूर्दते। वररुचिस्तु पूर्वसूत्रे उपधाग्रहणमिहार्थं तेन नामिनो र्वोरित्यादिना प्रकृतिव्यञ्जने दीर्घो न स्यात् कुर्दते खुर्दते इत्याह। (२८-२९) भासने। भासने दीप्ताविति भट्टमल्लादयः। (३२) दीनं त्वामनु-नाथते कुचयुगं पत्रावृतं मा कृथाः इति चक्षिङो ङानुबन्धकरणादात्मनेपदमिति केचित्। अन्ये तु आशिष्येव नाथ इत्यात्मनेपदं नेदं नियमार्थं किं तर्ह्यनुदात्तानुबन्धलक्षणात्मनेपदानित्यत्वे नित्यात्मनेपदार्थं तेनाशिषि नित्यं अन्यत्र विकल्पं ज्ञापयतीत्याह। वस्तुतस्तु याचनमप्याशंसाविशेष इति चन्द्रगोमिनोक्तं। मूर्धन्योपदेशोऽयमिति भाष्ये। (३४) श्रथ इत्येके। (३५-३६) चन्द्रगोमिना ग्रथ ग्रथि कौटिल्ये इति पठित्वा ग्रथते ग्रन्थते। अनेकार्थत्वात् संदितार्थत्वं चानयोः ग्रथितं ग्रन्थितमित्युक्तमिति सुभूतिः। (३८) शंशीककः शिशुकर्किं-शुककोशकौशिति कप्फिणद्वाक्षरं शंशीककः कल्याणवर्धकः। (४५) अस्मात् शङ्कुलमिति पुरुषोत्तमः। (५३) एतदनन्तरं मकीति रामः मङ्कते। (६०-६१) तिक टिक। अनुबन्धशून्य इत्येके। (७०-७१) वेगगति-र्गमनारम्भो वेति गोविन्दभट्टः गतिपर्याये भट्टमल्लोऽपि। बाहुलकादरः खत्वं च वङ्खरः। (७९) तृतीयस्वरानुबन्ध

इत्येके कथ्यते। (८४) ष्टु च स्तोकः। (८८) केचिदयं न पठ्यते। (९३) अयमोष्ठ्यादिरिति काशीखण्डे गङ्गासहस्रनामे व्याससमयः वर्चस्करी बलवती बलीन्मूलितकल्मषेति। (९७) भाज। (९९) स्वन्ज। (११३) अधोऽर्थे हेठ इति धातुप्रदीपः। (११९) परिभाषण इति गोविन्दभट्टः। (१२०) मज्जने इति गोविन्दभट्टः। (१२९) हेडते त्यजतीत्यर्थ इति धातुप्रदीपः। (१४३) मेपृ गतौ इत्यपरः। (१४८) अथाष्टौ। (१५०) कत्थते स्तोमयति च श्लाघते शाडतेऽपि च। शोभते शल्भते शाठ्यते सुधः सप्त कत्थने इति भट्टमल्लः। वीभृ च। चात् कत्थने चीभृ इति पाणिनीयाः। रेभृ रभि अभि शब्दे। रेभते रम्भा इति विलोचनादयः। वर्णदेशनायां तु पवर्गीयोऽयं वकारः रामोऽप्यनेनैव हेरम्बो गणपतिरित्याह। अम्भते अम्भः। लभिरित्यन्ये लम्भते। (१५३-१५४) गात्रविनामो गात्रशैथिल्यमिति गोविन्दभट्टः। जभीत्येके। (१५५) शल्भ कत्थने। (१५८) स्तम्भः क्रियानिरोध इति भीमः, स्तोभ इति गोविन्दभट्टः पठति, स्तोभो दीर्घजिह्विरिति व्याचष्टे च। (१६५) येस्तु स्तुत्यर्थस्य पणेरेवायाप्रत्यय इष्यते तन्मते जित्वा परीरम्भमथाधरोष्ठं पुनः पणस्वेत्युदिता भवेम इत्युत्तरकुमारे सामान्येन स्मरणात् सतमेतद् नार्षमिति भागवृत्त्यादयः। (१६६) भट्टमल्लेन स्तौति स्तुते नुवति नौति पनायतीड् स्तुत्यामुचत्यपि पणायति च स्तवीति इति परस्मैपदमुक्तं। (१७२) विलोचनस्त्विमं न पठति। (१७८) नयते रक्षणे गत्यां दयते तु तयोरपि। आदानदानहिंसासु इति नानार्थे भट्टमल्लः। (१८६) शलाका-कुशला शकालिख्येष्विति नलचम्पूयमकं। (१९१-१९२) आदानं ग्रहणं। अव्यक्तशब्दे इति चान्द्राः। (१९८) नीचं समृद्धमपि सेवति नीच एव, स्वाधीने विभवेऽप्यहो नरपतिं सेवन्ति किं मानिनः इत्यादौ गणकृतानित्यत्वं। (२०४) पकारान्त इत्येके। प्लविरपि धातुरिति मैत्रेयः। (२०६) पर्ष इति प्राञ्चः। उणादौ पर्षत्। (२१४) उपपूर्वोऽयमौदास्ये इति वर्धमानः द्वेषाभावेऽनादरे चेत्यन्ये। (२२३-२२४) यथाक्रमं वृकघोटकयोः शब्दे। (२३०) नसा पचाद्याचीति धातुप्रदीपटीका। (२३२) शास इति गोविन्दभट्टः। (२४२) वर्णविपर्यासात् प्रवह्लिका। (२४९) ग्रहू ग्रहणे इत्येके ग्रहते ऋदुपध इत्येके गर्हते। (२५१) दन्त्योपदेशोऽयमिति शाब्दिकालङ्कारः। अयं तु प्रसाद इति कश्चित्। (२६०) जुङ इति पारायणिकाः। (२६५) जवनशोनवशोनसमीरण इति कप्फिणयमकं (२६७) विध्वंसनं स्रंसनं तस्याभावः स्थापनमिति व्याख्याय अविध्वंसनमिति गोविन्दभट्टः प्राह। (२७०) त्वाहि मामघदुःखितमित्यादौ त्रायते इति वा क्विप् तत आयिलोपे रूपमिति दुर्घटवृत्तिः त्रातेवाचर इत्यर्थः। (२७४) विहायसाशब्द आदन्तोऽव्ययः तथा चाव्ययसूत्रे विहायसेति वियदर्थ इति विस्तरसूत्रं। (२७८) राभस्यमिहौत्सुक्यं निर्विचारप्रवृत्तिरिति गोविन्दभट्टः। (२८४) स्नेहनं सेकः प्रीतिरप्येके। (२८७-२८९) पुनर्हननं वा। (२९३) तालव्यान्तोऽयमित्यन्ये। (२९४) अनृष्ठ। दन्त्योऽयमिति प्रमाद इति रामः। (२९७) अयमोष्ठ्यादिरिति काशीखण्डे गङ्गासहस्रनामे व्याससमयः (व्रतरूपा वृत्तिरूपा बहुविघ्नविनाशकृत्)।

(१) नाघटन् घटतामियादित्यादिव्यक्तिविवेकप्रयुक्तिश्चिन्त्येत्येके। (२) चलने इति गोविन्दभट्टः। (८) शैघ्र्ये वृद्धोर्घटादेस्तु दघते गतिहिंसयोरिति भट्टमल्लः। (२३) बाहुलकादित्वं किखिर्वानरो। (२५) मैत्रेयादयस्तु चकारं न पठन्ति। (४२) अनेकार्थत्वेऽपि संभक्तिशब्दयोरर्थयो र्नं मानुबन्धत्वं वानयत्यपि गोविन्दभट्ट आह। (४३) अयं चलनेऽपीत्येके। (४६) आध्यानादन्यत्र अस्मारयदुपगीतिमिति गङ्गादासः। (४८) केचिदयमिह न पठ्यते। (४९) गोविन्दभट्टस्तु शापयतीति खेदार्थे प्रत्युदाजहार। (५०) दान्तशान्तादिसूत्रे रवमतिना मारण-तोषणनिशामनेषु ज्ञा घटादिः इत्युक्तं। (५१) चालयन् सकलां पृथ्वीमित्युद्घाटनार्थः। (५२) उन्माथनं पीडा

उत्क्षेपणं च। (५३) उल्ललयांचकारेति माघः वल्लभल्लित्यादिप्रयोगेष्वगणपठितो धातुरित्याह। (५४) ग्लपनयोः। ग्लपनं हर्षक्षय इति वर्धमानः। (५५) अवानन्तरं स्नीऽवतंसी वा। स्नानयति स्नयति पुष्पं बालः। (७५) इह दल वल स्खल क्षप त्रपाश्च दृश्यन्ते इति कुलचन्द्रः। (७७-७९) वररुचिवृत्तौ तु त्रयाणामेषामपि विकल्पो दृश्यते, तन्मते भ्राशभ्लाशावपि न ऋदनुबन्धौ। (८७) धनस्य भावो धान्यं सम्पद्वतेति गोविन्दभट्टः। (९२) गन्धोऽर्दनमिति गोविन्दभट्टः। (१०३) उद्दंमुस्तव रुधिरमिति साधु नञोषत्प्रतिषेधादिति वररुचिः अस्ति वमिः प्रकृत्यन्तरमीश्वादिरित्यन्यः। (१०४) जुलादावस्य पाठो लिपिभ्रमज एवेति विस्तरवृत्तिः। (१०५) मीचनं सकर्मकः स्रवणेऽकर्मकः। (१०७) अनुबन्धशून्य इति धातुप्रदीपः। (११४) कसः। तालव्यान्तोऽयमिति नन्दिचतुर्भुजौ।

(१) हिक्कते हिक्कतीत्येतौ हिक्कायामिति भट्टमल्लः। (३) अच्चु पूजने इति प्राचीनानां पाठः। (५) मूर्धन्यान्तोऽयमित्येके। (६) अय वेणति चिन्तानिशामनगतिवादित्रग्रहणवृद्धिषु इति भट्टमल्लः, वादित्रं मुरजादि तस्य ग्रहणमित्यर्थः। (९-१०) गोविन्दभट्टस्तु चते चदे च याचने इति प्रकृतिसम्बन्ध एव चकारः पूर्वधात्वपेक्ष इति तेन रेट् धातु र्याचनेऽपि। (११) पर्याप्तिः सामर्थ्यं परिपूर्णतेति गोविन्दभट्टः, भट्टभास्करेण तु हिंसार्थत्वमप्यस्वीकृतं। (१२-१३) दन्त्यवर्गद्वितीयान्ताविंत्येके। (२०) तालव्यवर्गप्रथमादिरित्येके, चुन्दति। (२२) ऋष। अर्षति-ते स्वरादिरयमिति पूर्णचन्द्रत्रिलोचनरामाः, तालव्यवर्गचतुर्थादिरिति दुर्गमैत्रेयौ। (२३) चीय इति धातुप्रदीपः। (२४) निशामनं चक्षुःसाधनं ज्ञानं। क्तावस्य नाभिधानं। (२८) गोविन्दयकारमधीत्य भयमनुवर्तयति। (३२) गोविन्दभट्टस्तु प्लच इति पठित्वाऽचि प्लचो हृष इत्युदाजहार, भच इति दुर्गः। (३३) कश। तालव्यान्तोऽयमिति रामः। (३९) धारणमिह धरणं इनः स्वार्थिकत्वात्। वर्धमानस्त्वस्य पाठोऽपौराणिक एव धरतीति प्रयोगाभावात् जगद्विधीर्षौरित्यपप्रयोग एव इति प्रलपति। तन्न। नयनविषयीभावे भावं दधार धराधिप इति नैषधे परीक्षायां परस्मैपदस्य दृष्टत्वात् अनेकैरङ्गीकृतत्वाच्च। (५४) गोविन्दभट्टस्तु स्पर्धायां वाचौति मन्यमानः स्पर्धाविषये वाचीत्याह। (५६) अयमीश्वादिरिति काशीखण्डे गङ्गासहस्रनाम्नि व्याससमयः वसुधारा वसुमती विचिवाङ्गी विभावसुः। (५७) शूनशूनानीनशदिति कप्फिणह्यचरं।

**१-२. अद प्सा भक्षने**—अत्ति गुडं पोतः, प्साति तृणं गौः, पिप्सासति, पाप्सायते। **३. षस स्वप्ने**—सस्ति स्वस्तिमान् सुखेन स्वपितीत्यर्थः। **वश कान्तौ**—वष्टि कष्टं न कश्चित्। **४. हन हिंसागत्योः**—हन्ति परभटान् आहवे वीरः; गतावस्याप्रायिकः प्रयोगः। **५. द्यु अभिगमने**—द्यौति द्यूतकारान् सभिकः, द्युवन्। **६. यु मिश्रणे**—यौति यवागूं पयसा पिपासुः। केचिदमुमकर्मकमेव मन्यते, तदा यौति यवागूः पयसा मिश्रिता भवतीत्यर्थः। **७. णु स्तुतौ**—नौति नायकं सत्कविः स्तुतिभिः। **८. क्ष्णु तेजने**—क्ष्णौति खड्गं कर्मकारः निशानयतीत्यर्थः। **९. ष्णु प्रस्रवने**—प्रस्नौति गौर्वत्ससन्दर्शनेन। **१०-१२. टुक्षु कु रु शब्दे**—क्षौति रौति कौति वा कोकिलः। सामान्यनिर्देशेऽपि कौतिः

शब्दमात्रे कुवतिरार्तस्वरे कवतिरव्यक्तस्वरेऽभिधानात्। १२. षु प्रसवे—सौति शबली धवलवत्सं। १३. इक् स्मरणे। अधिपूर्वस्यैवास्य प्रयोगोऽभिधानात् तथा इङ् इकावधिपूर्वाविवेति दुर्गसिंहः—अध्येति वधूरधिनाथस्य। ससीतयो राघवयोरधीयन्निति भट्टिप्रयोगस्तु अनेकार्थत्वादिङा समर्थनीयः। केचित् तु इक् स्मरण इत्यस्यैव अधीयन्निति इयादेशः यादेशः पुनर्न भवति इण्वदिकोऽपीति अपिशब्दस्य बहुलार्थत्वादित्याहुः। वस्तुतस्तु इण् गतिस्मृत्योरिति पाठे सिद्धे पृथगिकः पाठोऽनित्यार्थमादेशस्य। १४. इण् गतौ—एति नीतिमन्तं नृपलक्ष्मीः। १५. वी प्रजनकान्त्यसनखादनेषु। प्रजनो गर्भग्रहणं कान्तिरिच्छा असनमिह क्षेपणं (व्याप्तिर्वा, तदा तालव्यमध्यः) खादनमभ्यवहारः, चकाराद् गतिश्च, एतेषु यथाभिधानं प्रयोगः प्रत्येतव्यः—वेति गौः। १६. भा दीप्तौ। दीप्तिरिह उज्ज्वलभावः—भाति भास्कर उदयगिरिमारूढः। प्रतिपूर्वस्य योगे षष्ठ्यर्थे वा द्वितीया प्रतिभाति भवन्तमयमर्थः। १७. या प्रापणे। प्रापणमिह प्राप्तिरेव गत्यर्थान्तरं न पुनः प्रापणा—याति देवो यमुनां विहर्तुं। १८. वा गतिगन्धनयोः। गतिरिहानुद्देश्या अतो व्यापिका गन्धनं सूचनं—वाति वायुश्चलतीत्यर्थः, वाति वृष्टिवार्तां पिपिलिकापंक्तिः, सूचयतीत्यर्थः। १९. ष्णा शौचे—स्नाति तीर्थतोये तपस्वी। २०. श्रा पाके—श्राति यवागूं दरिद्रगृहिणी। द्रा कुत्सायां गतौ। (कुत्सायामिति गतिविशेषणं)—द्राति पङ्गुः निपूर्वो निद्रायां। २१. पा रक्षणे—पाति नृपतिः प्रजाः। २२-२३. रा ला आदाने—राति लाति वा खड्गं खिसंग्रामयिषुः गृह्णातीत्यर्थः। दाने इति केचित्। २४. दाप् लवने—दाति दात्रेण व्रीहीन् कृषकः, दिदासति। २५. ख्या प्रकथने—ख्याति आख्यानं कथकः, चाख्यायते। २६. प्रा पूरणे—प्राति पेटिकां पुस्तकेन शिष्यः पूरयतीत्यर्थः। २७. मा माने—माति भूमिं नलेन ग्रामणीः। वृत्। भादिसमाप्त्यर्थं वृत्करणं। २८. विद ज्ञाने—वेत्ति विद्वान् विषयदोषं; संपूर्वोऽकर्मको रुचादिः। २९. अस भुवि। भवनं भूः सत्ता विद्यमानतेति यावत्—अस्ति वास्तविकः स्वस्तिमान्। ३०. मृजु शुद्धौ—मार्ष्टि मुखं जलेन धीरः। ३१. वच भाषणे—वक्ति सूक्तं विवेकी, वचतीत्यादिप्रयोगादर्शनात् नोदाहृतं, वक्तृ,

उल्का। ३२. रुदिर् अश्रुविमोचने—रोदिति रमणी विमानिता वल्लभेन। ३३. ञिष्वप शये—स्वपिति युवतो कान्तेन सह। ३४. श्वस प्राणने—श्वसिति सम्यग्भिषक्प्रयोगादातुरः। ३५. अन च। प्रपूर्वस्य प्रायेण प्रयोगः—प्राणिति पुण्यवान् बहूनि वर्षाणि। ३६. जक्ष भक्षहसनयोः। भक्षणं भक्षः—जक्षिति राक्षसो नरशिरः। रुदिरित्यादिजक्षपर्यन्तो व्यवस्था। ३७. जागृ निद्राक्षये। नायं ॠदनुबन्धः जागर्तेरिति निर्देशात्—जागर्ति यामिको राजसदने। ३८. दरिद्रा दुर्गतौ। नायमादनुबन्धः दरिद्रातेरिति निर्देशात्। दुर्गतिरिहाकिञ्चनोभावः—दरिद्राति दुर्दैवहतकः, दरिद्रयति। ३९. चकासृ दीप्तौ—चकास्ति चामीकरालङ्कृता कामिनी, चिचकासिषति। ४०. शासु अनुशिष्टौ। अनुशासनं विनयनं—अनुशास्ति शास्त्रं शिष्यमुपाध्यायः। वृत्। शासिपर्यन्ताः पञ्च जक्षादयोऽनभ्यस्ता अप्यभ्यस्ता इत्यर्थः। ४१. चर्करीतं चेत्यके। चक्रायितलुकि धातुरदादिः परस्मैपदीत्यर्थः, बोभवीति बोभातीत्यादयः प्रयोगतोऽनुसर्तव्याः। भाषायां प्रायः प्रयोगाभावादाह इत्येके इति परस्मभाषाः। अदप्रभृतयश्चर्करीतपर्यन्ताः परस्मैपदिन इत्यर्थः। ४२. चक्षिङ् व्यक्तायां वाचि। इकारोऽयमुच्चारणार्थो न पुन नोगमज्ञापनार्थः। कश्चिदाह आत्मनेपदप्रयोजनोऽयामकारः अनुदात्तो ङकारश्चानुबध्यते ततश्चोभयानुबन्धेन अनेन अन्य एकानुबन्धा आनत्यात्मनेपदा यथाप्रयोगमूहनीयाः—आचष्टे चतुरश्चारुकथां, कर्मणि आख्यायते, नृचक्षाः, विचक्षणः। ४३. ईर गतौ कम्पने च। पृथग्विभक्तिश्चकारश्च सुखार्थः। केचित् पुनः कम्पनस्यामुख्यत्वख्यापनार्थमित्याहुः-ईर्ते नर्तकी ललितपदं, ऐरिरत् ईरिरिषति। ४४. ईड स्तुतौ—ईट्टे पटुनृपभट। ४५. ईश ऐश्वर्ये। ऐश्वर्यं ईश्वरीभवनं अधोनीकरणं वा—ईष्टे सम्राट् पृथिव्याः पृथिवीं वा, ईशा लाङ्गलदण्डः। ४६. आस उपवेशने—आस्ते स्वस्थमना आसने, विद्यमानतायां पुनरस्य प्रायः प्रयोगः। ४७. आङः शास इच्छायां—आशास्ते स्वस्ति वास्तविकः। केचिदमुमुदनुबन्धं पठन्ति, तेषां आशशासत्, अस्माकं तु आसीशसत्। ४८. वस आच्छादने—वस्ते वस्त्रं स्नातः। ४९. कसि गतिशातनयोः। शातनमिह ध्वंसनं—कंस्ते स्म कंसं कृष्णः। ५०. णिसि

चुम्बने—प्रणिंस्ते तरुणीवदनं युवा। ५१. णिजि शुद्धौ—प्रणिंक्ते पात्रं पानीयेन पुमान्। ५२. शिजि अव्यक्ते शब्दे—शिंक्ते शशिमुख्या हंसकः, (शिञ्जिनी)। ५३. वृजी वर्जने—वृक्ते वृक्षं पक्षी। ५४. पृची सम्पर्के। सम्पर्कः संयोजनं—संपृक्ते पवनः पुण्यगन्धेन। संपृक्ते मधुना चूर्णं भिषगित्यन्तर्भूतेनर्थत्वात्। पृजात्येके—पृंक्ते, पिजि इत्येके—पिंक्ते। ५५. षूङ् प्राणिगर्भविमोचने—प्रसूते सूतं गर्भिणी। ५६. शीङ् स्वप्ने—शेते शिशुः शय्यायां। ५७. इङ् अध्ययने—अधीते वेदान् ब्रह्मचारी। ५८. दीधीङ् दीप्तिदेवनयोः—आदीधीते अनधीनः परेषां। ५९. वेवीङ् वेतिना तुल्ये—आवेवीते विष्टिः परकर्म। केषाञ्चित् छान्दसावेतौ, शर्ववर्मणस्तु लोकप्रसिद्धशब्दान्वाख्याने विनिवेशितचेतसो दीधीवेव्योरिवर्णयकारयोरित्याचक्षाणस्य मते भाषायामप्यवसीयेते। आङ्पूर्वयोरेवानयोः प्रयोगः। ६०. ह्नुङ् अपनयने—अपह्नुते परवित्तं चौरः। आत्मनेभाषाः (१७)। ६१. द्विष अप्रीतौ—द्वेष्टि द्विष्टे वा पतिं भार्या। ६२. दुह प्रपूरणे। प्रपूरणमिह प्रक्षारणं मोचनमिति यावत्—दोग्धि दुग्धे वा गां पयो गोपालकः। ६३. दिह उपचये। उपचयो वृद्धिभावः तत्करणं वा—देग्धि दिग्धे देहः प्रतिदिनम्, उपचितो भवतीत्यर्थः, देग्धि सौधं सुधया लेपकः, उपचितीकरोतीत्यर्थः। संपूर्वोऽयं संशये—सन्दिग्धे स्थाणौ पुरुषः। ६४. लिह आस्वादने—लेढि लीढे वा पद्मं मधु मधुलिट्। ६५. ऊर्णुञ् आच्छादने—प्रोर्णौति प्रोर्णोति प्रोर्णुते वा रेणुभिराकाशं वायुः। ६६. ष्टुञ् स्तुतौ—स्तौति स्तुते वा देवं सत्कविः। प्रपूर्वोऽयमवसरे, संपूर्वोऽयं परिचये। (अत्र तु वृत्तिहिंसयोरिति केचित् पठन्ति)। ६७. ब्रूञ् व्यक्तायां वाचि—ब्रवीति ब्रूते वाग्मी सभायां मधुरं वचनं। विभाषिताः।

(६) अभिश्रवे इति केचित्। (९) शब्दमात्रे पठितोऽपि हृक्विकाविषय एव। (१२) ऐश्वर्येऽपि केचित्। (१४) दीर्घोऽप्येति कल्पद्रुमः, नहि तरणिरुदीते दिक्पराधीनवृत्तिरित्यात्मनेपदं च दृश्यते। (१५) अशनं व्याप्तिरिति गोविन्दभट्टः। (१८) गतिरिह वायोरेव—पवते वाति वातस्य इति गत्यनुवृत्तौ भट्टमल्लः। गन्धनं हिंसेति रामः। टीकायामनेनैव वाशब्द आशङ्कितः। (१९) दन्त्योपदेशोऽयमिति कश्चित्। (२०) कुत्सागतिः पलायनमिति गोविन्दभट्टः। (२५) प्रथते इति गोविन्दभट्टसंमतः पाठः। संपूर्वोऽयं न प्रयुज्यते इति वर्धमानादयः, प्रयुज्यते इति भट्टमल्लादयः। (२८) अयमोष्ठ्य इति काशीखण्डे गङ्गासहस्रनाम्नि व्याससमयः—विद्या। वेगवतो

वन्ध्या ब्रंहणी ब्रह्मवादिनी। (३१) प्रथमपुरुषबहुवचनमपीति संक्षिप्तसारमतानुसारिणः। (३६) केवलं विलोचनोऽव हतमधीते। (५२) सामान्यतः पठितोऽपि भूषणानामिव शब्देऽभिधानात्। (५९) वेवीति वेतितुल्यार्थं इति भट्टमल्लः। (६२) प्रपूरणमिह रिक्तीकरणमिति धातुपारायणं। (६७) कथं विव्रतिः कटके क्षता जनैरिति प्रयोगः उच्यते घजि वीत्यत्व लाघवार्थमज इति वक्तव्ये घजेरिति इका गुरुनिर्देशो ज्ञापयति असार्वधातुकीयं कार्यमनित्यमिति सामान्यज्ञापकान्न षचादिश इति शरणदेवः। इदं तु रचितेनापि सूचितं ज्ञापकसमुच्चयेनापि लिखितं।

१. हु दाने—जुहोति हविरग्नौ कृष्णाय। दानमात्रपठितोऽपि देवतासंप्रदानकवह्न्यधिकरणवस्तुत्याग एव वर्तते। २. ञिभी भये—बिभेति व्याघ्रात् कातरः। ३. ह्री लज्जायां—जिह्रेति गर्हितं कुर्वन् धीरः। ४. पृ पालनपूरणयोः—पिपर्ति रामो दीनं। ५. ओहाक् त्यागे—जहाति निजं तेजः परैरभिभूतः, चेक्रीयितलुकि न दीर्घः—जहाति, जहेति। ६. घृ क्षरणदीप्त्योः—जघर्ति घृतं क्षरति दीप्यते वा घरति भौवादिकत्वात्। प्रयोगस्त्वनयोरप्रायिक एव। ७. हृ प्रसह्यकरणे। प्रसह्यकरणं बलात्कारः—जहर्ति वित्तं एकाकिनो वर्त्मनि दस्युः। ८-९. ॠ सृ गतौ—इयर्ति तीर्थं वीतरागः, इयृयात् ऐयृम, ससर्ति। १०. भस भर्त्सनदीप्त्योः—बभस्ति निस्तेजसं सर्वः। ११-१२. कि कित ज्ञाने—चिकेति चिकेत्ति वा परवित्तं चतुरः। १३. तुर त्वरणे—तुतोर्ति तरुणी कान्तमभिसर्तुं, तुरितं, तोरितं। १४. धिष शब्दे—दिधेष्टि पटह आहवे। १५. धन धान्ये—दधन्ति धरणी, धान्यम् उत्पादयतीत्यर्थः, धान्यविषयभावना इह धान्यं। १६. जन जनने—जजन्ति जीमूतः प्रावृषि, जजन्तः जज्ञति। छान्दसोऽयमुच्यते परैः। ॠसृवर्जं घृप्रभृतयश्छान्दसा इत्येके। परस्मैभाषाः। १७. णिजिर् शौचपोषणयोः—नेनेक्ति नेनिक्ते वा पत्रं पुत्रं वा पिता। १८. विचिर् पृथग्भावे—वेवेक्ति वेविक्ते वा पिकः काकात्, विवेकः। १९. विष्लृ व्याप्तौ—वेवेष्टि वेविष्टे वा दिशो वर्षासु मेघः, विष्णुः। २०. डुदाञ् दाने—ददाति वित्तं दाता द्विजेभ्यः, दत्ते। २१-२२. डुधाञ् डुभृञ् धारणपोषणयोः—दधाति विधुर्धवलं धाम, धत्ते, बिभर्ति बिभृते भृत्रिमः। उभयतोभाषाः। २३. माङ् माने शब्दे च—मिमीते महीं नलेन। २४. ओहाङ् गतौ—जिहीते जह्नुतनयां

जितेन्द्रियः। आत्मनेभाषौ। इति दुर्गसिंहोक्तगणवृत्तौ लुग्विकरणा अदादयः समाप्ताः।

(४) दीर्वान्त इत्येके। (६) हरणे। (२०) दानेऽपीत्येके—द्विषता विहितं त्वयाऽथवेति किराते दत्तमित्यर्थ इति मैत्रेयः। (२३) अत्र ह्नुत्शब्दव्याख्यानं धातुप्रदीपमात्रे दृश्यते।

१. दिवु क्रीडाविजिगीषाव्यवहारद्युतिस्तुतिकान्तिगतिषु। क्रीडा खेलनं विजिगीषा विजयेच्छा व्यवहारः क्रयविक्रयलक्षणः द्युतिः शोभा स्तुतिरध्यारोपगुणकथनं कान्तिरिच्छा गतिः पादविहरणं—दीव्यति दिवि देवः। द्युतिविहारान्येषु सकर्मकोऽयं। द्यौः दिवा दिवस इत्यादि रूढौ। २. षिवु तन्तुसन्ताने। तन्तुभिः सन्तानो ग्रथनमित्यर्थः—सीव्यति वसनं शौचिकः। ३. स्रिवु गतिशोषणयोः—स्रीव्यति श्रियं नीतिमान्। ४-५. ष्ठिवु क्षिवु निरसने—ष्ठीव्यति वधूर्बकुलमतिरिक्तं, क्षीव्यति। ६. ष्णुष अदने—स्नुष्यति स्नुषा केवलान्नं। ७. क्नसु ह्वरणदीप्त्योः। ह्वरणमिह कौटिल्यं—क्नस्यति काञ्चनालङ्कारेण कुमारी। मानुबन्धोऽयं। ८. नृती गात्रविक्षेपे। अकर्मकोऽयं—नृत्यति नर्तकी सातिशयं। ९. त्रसी उद्वेगे—त्रस्यति कातरः तीव्रसंग्रामात्। १०. कुथ पूतिभावे—कुथ्यति दुरितमामिषं। ११. पुथ हिंसायां—पुथ्यति रिपुं शक्तः। १२. गुध परिवेष्टने—गुध्यति वल्ली विटपिनं। १३. क्षिप प्रेरणे—क्षिप्यति पापेन परितः शरान्। १४. पुष्प विकसने—पुष्प्यति कलिका कुन्दस्य माघे। १५-१७. तिम ष्टिम ष्टीम आर्द्रभावे—तिम्यति स्तिम्यति स्तीम्यति वा वस्त्रं बहिर्वर्षणेन, तेमनं। १८. व्रीड चोदने। चोदनं प्रेरणं लज्जा तु अभिधीयते--व्रीड्यति वरो वधूं नवीनां, लज्जायामकर्मकः—व्रीड्यति नवोढा। १९. इष गतौ। अनोः प्रायेण प्रयोगः—अन्विष्यति शिशुं जननी। २०-२१. षह षुह शक्तौ। शक्तिरिह क्षमा—सह्यति सुह्यति वा सह्यवचनं चतुरः। सुहिरयं न प्रयुक्त इत्येके। २२-२३. जॄष् झॄष् वयोहानौ। वयोहानिरिह गतबहुवयोभावः—जीर्यति झीर्यति वा विधवा दुःखमनुभवन्ती, जरा झरा जर्जरः झर्झरः। २४. शो तनूकरणे—श्यति शोभनम् असिं असिधावकः। २५. छो छेदने—छ्यति कच्छपं पुष्यायां वास्तविकः। २६. षो अन्तकर्मणि—अवस्यति समये यमो

जन्तून्। २७. दो अवखण्डने। अवपूर्वस्य प्रायः प्रयोगदर्शनादवपूर्ववानयं—द्यति अवद्यति वा दशनेन वधूनामधरं युवा, अवदायः। २८-२९. राध साध संसिद्धौ। राधिरिह विप्रश्नेऽपि—राध्यति राज्ञे गणकः, राध्यति साध्यति वा ओदनः निष्पन्नीभवतीत्यर्थः। ३०. व्यध ताडने—विध्यति। ३१. मृग अन्वेषणे—मृग्यति मृगान् मृगयुः। केचिदस्य अमर्गीदिति मन्यन्ते, अमार्गीदिति तु मार्ग अन्वेषणे इत्यनेन। ३२. पुष पुष्टौ—पुष्यति पुष्या प्रयागे प्रयोजनं। ३३. शुष शोषणे—शुष्यति सागरः समये। ३४. दुष वैकृत्ये—दुष्यति दारकर्मणा कृपणः। ३५. श्लिष आलिङ्गने—श्लिष्यति शीते शयितः सयौवनां विलासी। ३६. ष्विदा गात्रप्रक्षरणे—स्विद्यति दयिता हृदये ईशेनोपगूढा। ३७. क्षुध बुभुक्षायां—क्षुध्यति निर्धनः पथिप्रोषितः शाकादिकं। ३८. शुध शौचे—शुध्यति ताम्रमम्लेन। ३९. षिधु संसिद्धौ—सिध्यति शुभकालप्रयातस्य कार्यं। ४०. रध हिंसायां च। चकारो निष्पत्त्यनुकर्षणार्थः। ४१. तृप प्रीणने—तृप्यति तन्वी सुरतेन। ४२. दृप हर्षणमोचनयोः—दृप्यति दानवबलं मदिरया। ४३. मुहि वैचित्त्ये। वैचित्त्यं ज्ञानशून्यता—मुह्यति शोकाकुला महिला। ४४. द्रुह जिघांसायां—द्रुह्यति दारुणः सुजनमपि। ४५. ष्णुह उद्गिरणे—स्नुह्यति स्निग्धो मधुरवचः, सुस्नुक्षति सुस्नोहिषति। ४६. ष्णिह अप्रीतौ (प्रीतौ, रमा)—स्निह्यति संसारे सत्पुरुषः। ४७. णश अदर्शने—नश्यति दीनो दुर्भिक्षे। वृत्। रधादिमुहादिसमाप्तौ इदं वृत्करणं, तत्र रधादिरष्ट मुहादिः पञ्च। ४८-४९. शमु दमु उपशमे—शाम्यति दाम्यति शिखी वर्षेण, प्रशान्। ५०. तमु काङ्क्षायां—ताम्यत्यन्नं आकाङ्क्षाविषयो भवतीत्यर्थः। सकर्मकोऽपि दृश्यते—ताम्यत्यन्नं बुभुक्षितः वाञ्छतीत्यर्थः, प्रतान्। ५१. श्रमु तपसि खेदे च—श्राम्यति तीर्थे तपस्वी, तपस्यति खिद्यति वेत्यर्थः। ५२. भ्रमु अनवस्थाने—भ्राम्यति पद्मिनीनामुपरि भ्रमरः। ५३. क्षमु सहने—क्षाम्यति द्विजापराधं धार्मिकः, कैश्चिदयमूदनुबन्धः पठ्यते, क्षंस्यति क्षमिष्यति। ५४. क्लमु ग्लानौ—क्लाम्यति पथिकस्तृषाकुलः। ५५. मदी हर्षे—माद्यति मधुना मधुमासे रसिकः। एतेऽष्टौ शमादयः। केचिदत्र वृतं पठन्ति, न तत् कात्यायनमतं

अष्टग्रहणात्। ५६. असु क्षेपणे—इषून् अस्यति लक्ष्ये धानुष्कः अणसुच-चीत्यादिना (का ३.२. २७.) अणुपुषादिष्वस्य पाठस्तु सान्तोदनुबन्धप्रस्तावादेव। ५७. यसु प्रयत्ने—यस्यति योगी परमात्मचिन्तायां। ५८. जसु मोक्षणे—जस्यति वत्सं गोपालकः। ५९-६०. तसु उत्क्षेपे—तस्यति दस्यति स्म वा दशाननः कैलासं। ६१. वसु स्तम्भे—वस्यति वसुधामनन्तः। ६२. व्युष विभागे—व्युष्यति पितृधनं भ्रातृवर्गः। ६३. प्लुष दाहे—प्लुष्यति वनमग्निः अप्लुषत्। प्रुषो भौवादिकस्य लत्वे अपुषादित्वात् अप्लोषीत्। केचिदमुमुदनुबन्धं पठित्वा प्लुष्टः प्लुष्टा प्लोषित्वेत्यादिकमुदाहरन्ति। ६४. बिष प्रेरणे—बिष्यति। ६५. कुष श्लेषणे—कुष्यति कोमलाङ्गीं कामुकः। अस्यैव क्तान्तस्य पक्षे दान्तस्य प्रयोगे स्त्रीवृत्तस्य नदादित्वादीप्रत्ययो भवति। अन्त्यस्येत्वे कुषिता कुषिदी इति प्रयोगः। ६६. बुष उत्सर्गे—बुष्यति बुषं कृषकः, कडङ्गरं त्यजतीत्यर्थः। ६७. मसी परिमाणे—मस्यति माषं माषं कृत्वा बणिक्, मस्तः, मस्तकः, मसी, मासः। ६८. लुट विलोटने—लुट्यति कटकभूमिषु कातरः। उच समवाये—उच्यति त्रिसवनेन कचस्तपस्विनां, उग्रः, ओक इत्यादि। ७०-७२. भृशु भ्रशु भ्रन्शु अधःपतने—भृश्यति भ्रश्यति वा शाखायां पक्वं फलं वातेन भूमौ, बभर्श बभ्राश बभ्रंश। ७३. वृश वरणे—वृश्यति वरं स्वयम्वरा, अवीवृशत्। ७४. कृश तनूकरणे—कृश्यति कलानिधिं कृष्णपक्षः। ७५. ञितृषा पिपासायां—तृष्यति पथिकः पानीयं, तृष्णक्। ७६-७७. तुष हृष तुष्टौ—तुष्यति हृष्यति वा प्रिय-वचनेन विपश्चित्, अहृषत्। हृषु आलीक्ये इत्यस्य तु अहर्षीत्। ७८-८०. कुप क्रुध रुष रोषे—कुप्यति क्रुध्यति रुष्यति वा मानिनी रमणायापराधिने। ८१. डिप क्षेपे—डिप्यति पत्तिः परबले इषून्। अडिपीत् इति तौदादिकस्य। ८२. ष्टूप समुच्छ्राये—स्तुप्यति धान्यं कृषकः राशीकरोतीत्यर्थः। ८३. गुप व्याकुलत्वे—गुप्यति गाः प्रान्तरे वातवर्षं, आकुलीकरोतीत्यर्थः। ८४-८६. युप रुप लुप विमोहने—युप्यति रुप्यति लुप्यति वा मतिमविदुषां संभ्रमः वियामोहयतीत्यर्थः। ८७. लुभ गार्ध्ये—लुभ्यति लावण्यवतीं युवा, आकाङ्क्ष-तीत्यर्थः। ८८. क्षुभ सञ्चलने—क्षुभ्यति पयोधिरिन्दूदये। अक्षुभदिति

द्युतादिपठितेनैव सिद्धे यदिदं पुषादौ पठ्यते तदयं भान्तसाहचर्यादित्यवधेयं। अक्षोभीदित्यादिप्रयोगनिरासार्थमिति तु न परीहारः तस्यापि क्षुभ्नादिनाऽवश्यमभ्युपगमात्। ८९-९०. णभ तुभ हिंसायां—नभ्यति तुभ्यति वा भयानकं दुष्टो भटः। ९१. क्लिदू आर्द्रभावे—क्लिद्यति जरया पुरुषः। ९२. ञिमिदा स्नेहने—मेद्यति सुदिरो वर्षासु। ९३. ञिक्ष्विदा मोचने च। चकारात् स्नेहनेऽपि—क्ष्विद्यति तषेभ्यस्तण्डुलान्। ९४. ऋधु वृद्धौ—ऋध्यति विधुरनुदिनं शुक्लपक्षे।* ९५. गृधु अभिकांक्षायां—गृध्यति धनं दरिद्रः। वृत्। पुषादिसमाप्त्यर्थं। पुषादिः। ६४ परस्मैभाषाः। ९६. षूङ् प्राणिप्रसवे—सूयते पुत्रं ब्राह्मणी। प्राणिग्रहणमतन्त्रं—सूयते कुसुमं शाखेत्यपि। यद्यपि प्रसवो गर्भमोचनं तच्च प्राणिविषयकमेव तथापि आविर्भावमात्रेऽपि। ९७. दूङ् परितापे—दूयते दैन्येन मनस्वी। ९८. दीङ् क्षये—दीयते दारिद्र्यमदयोगिनः, दिदीये। ९९. धीङ् अनादरे—धीयते धार्मिकमसज्जनः। १००. मीङ् हिंसायां—मीयते मित्रं दुश्चरित्रः, मेता। १०१. रीङ् स्रवणे—रीयते गर्गरीतो घृतं, रिर्ये। १०२. लीङ् श्लेषे—लीयते शशिनः कला सूर्येऽमावास्यायां। १०३. डीङ् गतौ—डीयते डीनः। १०३. व्रीङ् वरणे—व्रीयते वरं कन्या। स्वादय ओदनुबन्धाः। तेन नत्वं। १०४. पीङ् पाने—पीयते पयः पिपासुः, अपेष्ट, पिप्ये, पेतुं। १०५. माङ् माने—मायते मेदिनीं हस्तेन स्थपतिः। १०६. ईङ् गतौ—ईयते ग्राममसौ ऐष्ट, अयांञ्चक्रे। अन्ये अत्राभ्यस्तवच्छावे ईये इत्युदाहरन्ति। १०७. प्रीङ् प्रीतौ—प्रीयते सत्यवचनेन साधुः, अप्रेष्ट, प्रेतुं। १०८. जनी प्रादुर्भावे—जायते, जनिष्णुः। १०९. दीपी दीप्तौ—दीप्यते प्रदीपो निर्वातदेशे, दीप्रः। ११०. पूरी

---

* कथं मानृधे मानृधाते मानृधिरे इति ऋकारे च का ३. ३. २० इत्यत्रोदाहरणानि। न च कर्मणीति वक्तव्यं वृद्ध्यर्थत्वेनास्याकर्मकत्वात्। न च भावे द्विवचनबहुवचनोयरसङ्गतेः। ऋच स्तुतौ अस्य कर्मणि रूपत्रयमिति चन्द्रः। परीक्षायां रुचाद्याश्रयणादात्मनेपदमित्यन्ये। अन्तर्भूतणर्थत्वेन सकर्मकत्वात् कर्मण्येवात्मनेपदमित्यपरे। सदर्थविदस्त्वेवमाहुः कालक्षणकर्मण्यात्मनेपदं मासमानृधे मासमानृधाते मासमानृधिरे। अथवा अनियमे च अगतीत्यादिना व्यतीहारे कर्तर्यात्मनेपदं। न च वक्तव्यं व्यत्यादिद्योतकविशेषणमन्तरेण कथमेतत् तदभावेऽपि दर्शनात् तथाच प्रियासुखं किम्पुरुषश्चुचुम्बे इति कुमारे।

—(पार्श्वटीका।)

आप्यायने—पूर्यते कुम्भं पयसो[1] भृत्यः। १११. जूरी जीर्णे—जरणं जीर्णं वयोहानिः—जूर्यते वृद्धः, हीनवया भवतीत्यर्थः। ११२. तूरी त्वरणहिंसयोः[2]—तूर्यते तीव्रहस्ती, त्वरते हिनस्ति वेत्यर्थः, अतूरिष्ट। ११३-११५. धूरी गूरी घूरी हिंसार्थाः—धूर्यते गूर्यते घूर्यते वा व्यालः सत्त्ववान्, धूर्णः, गूर्णः, घूर्णः। ११६. शूरी स्तम्भे च। हिंसापेक्षया चकारः—शूर्यते संग्रामे रिपून् शूरः, स्तभ्नाति हिनस्ति वेत्यर्थः। ११७. चूरी दाहे—चूर्यते शम्बूकं चूर्णकारः, चूरः। ११८. तप ऐश्वर्ये। अत्र वाग्रहणं पठित्वा तप धूप सन्ताप इत्यस्य भ्वादिपठितस्य ऐश्वर्ये दिवादित्वमात्मनेपदित्वं च पक्षे विधीयते इति व्याचक्षाणा अविचक्षणा अस्यार्थस्य वाग्रहणमन्तरेणापि इहोपदेशादेव लाभमपश्यन्त आत्मानमेवोपहसन्ति। अपरे तु वाग्रहणं परेण सम्बन्धयन्ति वृतु वर्तन इति। अस्य भ्वादौ द्युतादिपठितस्य वरणेऽनेकार्थत्वेन सिद्धस्यापि पक्षे यन् सिच् इडर्थं व्याचक्षते इत्यपि न सङ्गतं पूर्वोक्तादेव हेतोः। अन्ये तु वाग्रहणात् यनर्थमेव दिवादित्वं न तु द्युतादिवृतादिनिबन्धननिषेधार्थमिति मन्यन्ते। तदपि नागममूलमित्युपेक्षते। तदस्माकं वावृतु वरणे इत्यनेकस्वर उदनुबन्धधातु धाविषयतां धावति। तथा च वृत्ते तु वृत्तवावृत्तौ तता वावृत्यमानाऽसौ इति च संगच्छते। तप्यते नृपतिः प्रतापवानवनिमण्डले। नायं तपिः पतिरित्येके यस्य पतिरित्ययं प्रयोगः। ११९. वावृतु वरणे—वावृत्यते वरं पतिंवरा, विवावर्तिषते। यदि तु वृत्यते वरं पतिंवरा इति साधु तदा वृतेरेव दिवादिपाठोऽङ्गीकरणायः सिजादिरपि। १२०. क्लिश उपतापे—क्लिश्यते स्वकर्मभिरविनेता, क्लिश्यते कृपणः स्ववर्गमपि इति सकर्मकोऽपि, चिक्लिशः। १२१. काशृ दीप्तौ—काश्यते काशैः शरदरण्यं। १२२. वाशृ शब्दे। सामान्यतः पठिताऽपि तिरश्चामेव शब्देऽभिधानात्[3]—वाश्यते वामतः शिवा। एतावननुबन्धावित्येके, तदा अचीकशत् अवीवशत्। ११२. पद गतौ—पद्यते पदातिः कटकं। उपसर्गपूर्वः प्रायेण प्रयुज्यते यथायथमर्थान्तरे संपद्यते निष्पद्यते जायते इत्यर्थः अभिपद्यते जानातीत्यर्थः, विपद्यते विनश्यतीत्यर्थः एवं प्रयोगादूह्यं। १२३. खिद दैन्ये—

१. करणे षष्ठी, (टीका)। २. अयं गतित्वरणे केचित् त्वरणमात्रे केचित् (टीका)।
३. इदमग्रहमेव उव्दश्यमानः पितरं सशोकः इति भट्टिप्रयोगे, रमानाथः।

खिद्यते क्षुधया बालः। १२४. विद सत्तायां—विद्यते वित्तं बणिजां, अवित्त, विविदे। १२५. बुध अवगमने—बुध्यते बुद्धिमान् सूक्ष्ममर्थं, भोत्स्यमानः। १२६. युध संप्रहारे—युध्येते योधौ सांग्रामिकनयेन रणभूमौ। अभिमुखगतयोरन्योन्याभिभवेच्छा इह संप्रहार इति मुख्योऽर्थः, तत्र कदाचिदेकस्य सह भावनियोगः—युध्यते योधः परेण, कदाचिदभिहनने—युध्यते शत्रुमभिहन्तीत्यर्थः, सहयुध्वा। १२७. अनौ रुध कामे। अनावुपपदेऽभिलाषेऽर्थे रुधिरयमात्मनेपदी दिवादिरित्यर्थः—अनुरुध्यते रुद्धसंपदं स्वयमर्थोपार्जकः, अनुरुद्धः। १२८. मन ज्ञाने—मन्यते आम्नायं मतिमान्। १२९. अन प्राणने—अन्यते पानीयेन प्राणी, आनिष्ट, आने। केचिदमुं न पठन्ति। १३०. युज समाधौ। समाधिरिह योग्यीभावः—युज्यते युवतिषु यूनामनुरागः। १३१. सृज विसर्गे। विसर्ग इह त्यागः। तत्र व्युद्भ्यामेव वर्तते अन्यत्र करोत्यर्थः—सृज्यते मालां धार्मिकः। सृजः श्रद्धोपनयनक्रियायामेवाभिधानं असृष्ट श्रद्धोपनयनक्रियायां कर्त्तरि च असर्जि मालां धार्मिकः। १३२. लिश अल्पीभावे—लिश्यते पल्वलं निदाघे, अल्पीभवतीत्यर्थः। आत्मनेभाषाः। १३२. शक मृष क्षमायां। क्षमेहोपेक्षा—शक्यति-ते मृष्यति-ते वा द्विजापराधं साधुः। इह चकारमनर्थविदः पठन्ति। १३३. ईशुचिर् पूतिभावे। पूतिभाव इह चिरेण मधुरस्याम्लीभावः—शुच्यति-ते वा चम्पकदलं चिरेण। १३४. णह बाधने—नह्यति-ते कवचमङ्गे भटः, निनत्सति-ते, उपानत्। १३५. रञ्ज रागे—रज्यति-ते युवा युवत्या। राग इहानुरागः तात्पर्यमिति यावत्। क्वचिद् वर्णान्तरापादानं—रज्यति पटं नटः, क्वचिल्लोहितीभावः—रज्यति लोहितीभवतीत्यर्थः, अरङ्क्षीत्, अरंक्त। १३६. शप आक्रोशे—शपति-ते पिशुनः साधून्, निर्भर्त्सयतीत्यर्थः। विभाषिताः। शकादय उभयपदिन इत्यर्थः इति दुर्गसिंहोक्तगणवृत्तौ यन्विकरणा दिवादयः समाप्ताः।

(२) वीजसन्तान इति गोविन्दभट्टः पठति आह च वीजानि माषादयः तेषां सन्तानः प्रक्षेपणं। (३) ऊर्व्व सूरिति गदसिंहः सूते तालव्यपाठस्तु मूर्खभ्रमः। (४५) निरसनमिह फुत्कार इति भट्टमल्लः, सुखिन श्लेष्मशोषितशोर्वमननमिति केचित्। (६) इममेके न पठन्ति। (१४) सुवर्णपुष्पां पृथिवीमित्यत्र सुवर्णानि पुष्प्यतीति कर्मण्यणि व्युत्पादितं लोचनकृता तत् तु तथा सति ईप्रत्ययेन भाव्यमित्यनुपपत्तेःश्रीधरभट्टेन सुवर्णं पुष्पं यस्यामिति व्युत्पादितं। (२०-२१) शक्तिस्तृप्तिरिति क्षीरभट्टः। (२२) केचिदयं न पठ्यते। क्षान्द-

सोऽयमित्येके। (२३) अस्य षानुबन्धत्वं कश्चिन्न मन्यते। (२६) रामस्तु मूर्धन्योपदेशोऽयमित्याह। अन्ये त्विह साधिं न पठन्ति। (३१) दुर्गविलोवनधृतावयं नास्ति। अप्रयुक्तोऽयमित्यालङ्कारिकाः। (३५) आशीष-मावोऽयमिति कुलचन्द्रः। (४२) मोचनमित्यशुद्धः पाठ इत्युक्त्वा मोहनमिति गोविन्दभट्टः पठति मोहनमत्र गर्वः। (४३) दर्शनाभावो लुक्कायनमिति सर्वस्वं। (५०) ग्लानवप्ययं अथ ग्लानौ च। ताम्यति काङ्क्षायामिति भट्टमल्लः। (५६) अस्य पुषादौ पाठः प्रमादज इति रचितः प्रपञ्चार्थ इति सारसमुच्चयः। (५९-६०) उपचये। उपचयो वस्तुहानिरिति गोविन्दभट्टः। (६१) स्तम्भोऽनम्रतेति गोविन्दभट्टः। (६२) दन्त्यान्तोऽपौति वोपदेवः, पुष इत्येके। (६४) दन्त्यान्तोऽयमिति धातुपूजा वर्णदेशना च। मूर्धन्यान्तोऽयमिति चतुर्भुजः, तदनागमं। (६५) कुष्। कुस। (६६) बुष् दन्त्यान्तोऽयमिति वर्णदेशनाप्रभृतयः विस इति पठित्वा रक्सि इति क्षीरस्वामी। अतानन्तरं मुस खण्डने। मुस्यति विपक्षं चतुरः गुरुपुरुमुसलमिति भट्टिभाषाश्लेषमुत्तोल्य दन्त्यान्तोऽयमिति मुसलव्युत्पत्तौ वर्णदेशनया दर्शितं तत्रैव मूर्धन्यमध्योऽपि दृश्यते। (८२) केचिदमुं न पठन्ति। (८७) रामस्तु चकारमधीत्य मोहनमनुवर्तयति। (१०२) गोविन्दभट्टश्चकारमधीत्य स्रवणमनुवर्तयति। (१०६) अस्य क्विपोऽनभिधानमिति टीकाकृत्। ह्रस्वोऽयमित्यन्यः। (१११) अयं हिंसायामपि केचित् पठ्यते। (११५) केचिदयं वयोहानौ पठ्यते। (१२०) कण्ड्वादित्वात् क्लिश्यन्नपि हि मेधावीति भाषावृत्तिः। (१२५) यो न बुध्यति मन्दात्मा सर्वथासौ विनश्यतीति गणकृतानित्यत्वं। (१३१) संपूर्वकोऽयमकर्मकः संसृज्यते सरसिजैर-रुणांशुभिन्नैः। (१३५) कुषिरञ्जोः कर्मकर्तरि प्राचां श्यन् परस्मैपदं चेति भाषावृत्तिः। वर्धमानस्तु विकल्पेन परस्मैपदं विधाय दैवादिकस्याऽपि रञ्जेर्ग्रहणं नियमार्थं अन्यत्रनैव स्यादिति व्याचष्ट। (१३६) आक्रोशो भाषणमेव।

१. षुञ् अभिषवे। अभिषव इह पीडनं मन्थनं—अभिषुणोति-षुणुते सुरां शौण्डिकः, विलोडयतीत्यर्थः। २. षिञ् बाधने—सिनोति सिनुते वा केशान्-कन्याया जननी, सायकः, सितिः। ३. शिञ् निशाने—शिनोति शिनुते वा असिं असिधारकः, शयः। ४. डुमिञ् प्रक्षेपणे—मिनोति मिनुते वा मरिचं मांसतेमने, माता, मात्रिमं। ५. चिञ् चयने। चयनमिह राशीकरणं—चिनोति चिनुते वा चणकान् कृषकः। निर्पूर्वोऽयमवधारणे—निश्चिनोति पदार्थान् विपश्चित्। ६. स्तृञ् आच्छादने—स्तृणोति स्तृणुते वा वस्त्रेण मस्तकं वधूः। वातप्रमी र्वातमृगे भवेज्जलमुचि स्तरीः। ययीरश्वे पपीरर्के तन्द्रीर्निद्राप्रमीलयोरिति दर्शनादुणादावीः। ७. कृञ् हिंसायां—कृणोति कृणुते वा कापटिकः कोमल-हृदयं। अस्मिन्नस्य पाठो विकरणार्थ एव, अन्यथा उपाकृतः पशुरसौ योऽभि-मन्त्र्य क्रतौ हत इत्यादिप्रयोगोऽनेकार्थेन करोतिना सिद्ध एव। ८. वृञ् वरणे—वृणोति वृणुते वा वरं देवान् साधकः। ९. धुञ् कम्पने। कम्पनमिह कम्पना—

धुनोति धुनुते वा धवित्रं। ऊर्ध्वं धूनोति वायुरिति प्रयोगात् दीर्घान्त इति केचित्। उभयतोभाषाः। १०. दुदु उपतापे—दुनोति हृदयं दयिताविरहः। ११. हि गतौ वृद्धौ च—प्रहिणोति वार्त्तां विदेशस्थः, हिमं, हेमं, हयः। हिनोति बुद्धिरभ्यासादित्यादिप्रयोगः। चकार उपतापानुकर्षणार्थ इत्येके। १२. पृ प्रीतौ—पृणोति प्रियं प्रियवादिनी, अपार्षीत्। १३. स्पृ पालने च। प्रीतौ चकारात्—स्पृणोति नृपः प्रजाः। १४. आप्लृ व्याप्तौ—आप्नोति पुण्येन पुरुषो यशः, आपो जलं। १५. शक्लृ शक्तौ—शक्नोति साकारमाराधयितुं धीमान्, शक्रः। १६-१७. राध साध संसिद्धौ—राध्नोति साध्नोति वा धनमुद्योगिनां। साधिरिहाषोपदेष एव सृपिसृजीत्याद्युक्तं यत् तदुपलक्षणं। १८-२६. तिक तिग षघ रिक्ष कृवि चिरि जिरि दाश द्रु जिघांसायां—तिक्नोति तिग्नोति वा आहवे परबलं भटः शरैः। एतावास्कन्दने इत्येके, परे कृविवर्जिताश्छान्दसाः। रिक्षस्थाने रिघं (?) पठन्त्येके। चिरिजिरा नेदनुबन्धौ इदन्तावनेकस्वरौ सघ्नोति रिक्ष्णाति चिरिणाति जिरिणाति दाश्नोति द्रुणाति। कृविरिह प्रयुक्तो भाषायां इदनुबन्धोऽयं विकरणे कृभावो वक्तव्यः—कृणोति दानान् बलवत्तरः, चकृण्व, चिकृण्विषति, चरीकृण्वयते। २७. ञिधृषा प्रागल्भ्ये। धृष्णोति सभायां पटुः, धृष्णक्, धृष्णुः। २८. दन्भु दम्भे। दम्भो मिथ्याविकत्थनं—दभ्नोति दुष्प्रगल्भोऽविदग्धसभायां। २९. ऋधु वृद्धौ—ऋध्नोति विधः। ३०-३१. धिवि तृप प्रीणने—धिनोति धीरान् धर्मः, दिधिन्व, धिन्वुवत् (?)। तृप्नोति इह न णत्वं क्षुभ्नादिपाठात्। परस्मैभाषाः। दुप्रभृतयः परस्मैपदिन इत्यर्थः। ३२. अशू व्याप्तौ—अश्नुते पयः सर्वं प्रलये, आशिष्ट, अशिक्षते, अशिशिषते। ३३. ष्टिघ स्कन्दने। स्कन्दनमवगाहनं—स्तिघ्नुते सरसीं घर्मसमये घर्मार्तः, अस्तेघिष्ट। आत्मनेभाषौ। इति दुर्गसिंहोक्तगणवृत्तौ नुविकरणाः स्वादयः समाप्ताः।

(१) स्नानं चेति दुर्गसिंहः सन्धानं मङ्गलस्नानं चेति धातुप्रदीपः। (५) कल्पद्रुमस्तु भ्वादावपीमं पठति षवति-ते। (९) दीर्घान्त इत्येके। (१०) दुग्वो दीर्घश्चेति वचनादस्यापि निष्ठानत्वे दूनं। केचित् तु मृदुतया दुतयाऽधरलेखयेति माघप्रयोगात् भौवादिकस्य दवतेर्ग्रहणादस्य दुतं गमनार्थे तु दूनमित्येवाहुः। (११) मतिरिह प्रेषणं। (१२) पालने चेत्येके। स्तृ इति दुर्गरामौ। (१७) साध। अन्ये मूर्धन्योपदेशं

पठन्ति। (२६) द्रुणोति द्रुः द्रुमः इति भट्टमल्लमैत्रेयप्रभृतयः इकारान्त इत्येके। (२८) तमायपि। सोऽहं प्राग्भवतेव भूतजननीम्यक्षीमि खड्गाद्रतीति भवभूतिः। (३२) षयं संवाते घेति मैत्रेयः। (३३) आक्रन्दनमभियोग इति भट्टमल्लः।

१. तुद व्यथने—तुदति-ते मनोभवेन कामातुरा। २. णुद प्रेरणे—प्रणुदति-ते घोटकं तोत्रेण। अस्मन्मते भाषायां नुदधातोः परस्मैपदमेव भवति यत् तु विभाषितमध्ये पाठः तत् परमतानुवादेन। ३. दिश अतिसर्जने। अतिसर्जनमाज्ञापनं—आदिशति-ते संग्रामे गन्तुं वीरान् नृपतिः। ४. भ्रस्ज पाके—भृज्जति-ते राजीवं राजीवलोचना। ५. क्षिप प्रेरणे—क्षिपति-ते बाणं रणभूमौ भटः। ६. कृष विलेखने—कृषति-ते क्षेत्रं कृषकः। ७. मुचॢ मोक्षणे—मुञ्चति-ते अस्त्रं कञ्चुकी। ८. लुपॢ छेदने—लुम्पति-ते कदलीं खड्गहस्तः। ९. विदॢ लाभे—विन्दति-ते वा गोविन्दः शरीरं। १०. लिप उपदेहे। उपदेह उपचयः—लिम्पति-ते वपुश्चन्दनेन। ११. षिच क्षरणे—सिञ्चति-ते व्रीहीन् वारिवाहः। विभाषिताः। १२. कृती छेदने—कृन्तति तनुं तुण्डेनाण्डजः। १३. खिद परिघाते—खिन्दति खलः कुशलबुद्धिं। १४. पिष अवयवे—[1]पिंशति तण्डुलान् सूपकारः। वृत्। मुचादिगणसमाप्त्यर्थं वृत्करणं। १५-१७. रि पि ऋषी गतौ। [2]रियति राज्ञः पादप्रक्षालनाय दासः, पियति ऋषति ऋष्टिः। १८. धि धारणे—धियति धिया साधुः सदुपन्यासं। १९. क्षि निवासगत्योः—क्षियति लक्ष्मीरक्षतनये, प्रक्षीय। केचित् तु क्षि क्षये इत्यस्यैव दीर्घमिच्छन्ति तदा प्रक्षित्य। २०. षू प्रेरणे—सुवति मतिं शुभकर्मणि साधुः। २१. व्रश्चू छेदने—वृश्चति वृक्षं वर्धकिः। २२. ऋछ गतीन्द्रियप्रलयमूर्तिभावेषु। इन्द्रियाणां प्रलयः, गतिश्च इन्द्रियप्रलयश्च मूर्तिभावश्च इति विग्रहः। ऋच्छति मूर्छां वत्सः प्रहारेण गच्छतीत्यर्थः, पश्चिमावस्थामाश्रितस्य इन्द्रियमृच्छति प्रलीयत इत्यर्थः, मूर्तिः काठिन्यं मूर्तेर्भाव उत्पत्तिः कर्तुः काठिन्यसम्पत्तौ ऋछधातुर्वर्तते इत्यर्थः. घृतमृच्छति हेमन्ते, कठिनं भवतीत्यर्थः, संपूर्वोऽकर्म्मको रुचादिः समृच्छते। २३. कॄ विक्षेपे—किरति शरान् शूरः परसैन्ये, चेकीर्यते। २४. गॄ निगरणे। निगरणमभ्यवहारः—गिरति गिलति वा यवागूमौदरिकः। २५. उछी विवासे। विवासोऽतिक्रमः अन्तगमनमिति यावत्—

१. अवयवे अवयवीकरणे चूर्णीकरणे इति यावत्। २. रियति रजको जलाश्रयं वासःप्रक्षालनाय।

उच्छति वाञ्छा विरागिणः। २६-२८. जर्च चर्च झर्झ परिभाषणतर्जनयोः—जर्चति चर्चति झर्झति वा वीरः परसैन्यं। २९. त्वच संवरणे—त्वचति चर्म शरीरं। ३०. ऋच स्तुतौ—ऋचति ऋचा कृष्णचरणं। ३१. उब्ज आर्जवे—उब्जति कुब्जा कृष्णधृतचिबुका, समुब्जः। अस्य नामिनोर्वोरित्यादिना न दीर्घोऽनित्यत्वात् क्विपि उब् इति प्रमाणबलात्। ३२. उज्झष् उत्सर्गे। गुरोश्च निष्ठासेट इति सिद्धे अङर्थषानुबन्धकरणमनर्थकमेव किन्तु छन्दस्यनुबन्धकृत-स्वरविशेषसंपादनार्थमिति परानुवादार्थं। उज्झति मुह्यमानो बाह्येषु न तृष्णां। धातुपारायणकारस्तु जलमुज्झति जलादिन्तुदाजहार एतदेवाम्नायविदां हृदयं-गममेवास्माकं प्रतिभाति। सोपधोऽयमिति वदन्नशेषविदुषामुपहास्यो भवति। ३३. लुभ विमोहने—विलुभति भव्येन कातरः। ३४. रिफ कथनयुद्धनिन्दा-हिंसादानेषु—रिफति स्फुरद्भिरेफः, रेफोऽधमः। युद्धेन भावनिष्ठान्तेन क्रिया-भिधानं युद्धे निन्देति केचित्। ३५-३६. तृफ तृन्फ तृप्तौ—तृफति तृम्फति वा फाण्टमुपयुञ्जानो जनः। ३७-४२. तुप तुन्प तुफ तुन्फ ऋफ ऋन्फ हिंसार्थाः—तुपति तुम्पति तुफति तुम्फति ऋफति ऋम्फति वा वैरिणं विरोधी। ४३-४५. दृफ दृन्फ मिछ उत्क्लेशे—दृफति दृम्फति मिच्छति वा म्लेच्छः शूलेन क्लिश्यतीत्यर्थः। ४६-४८. गुफ गुन्फ दृभी ग्रन्थे—गुफति गुम्फति दृभति भद्रां मालां मालिकः, दर्भः, सन्दर्भः। ४९. चृती हिंसायां च। चकाराद् ग्रन्थे च—चृतति चौरः साधून्। ५०-५१. उभ उन्भ पूरणे—उभति उम्भति वा कुम्भं वारिणा दासः, उवोभ, उम्भांचकार, उभौ, उभयं। ५५-५३. शुभ शुन्भ शोभार्थे—शुभति शुम्भति वा सम्भावितः सदसि। शुभिरुचिभ्यां न स्यात् शुम्भतेरपि न चेक्रीयितं। वृत्। तृम्फादीनां शुन्भान्तानां संज्ञा-पूर्वत्वेन अनुषङ्गलोपाभाववतां परिच्छेदकरणार्थमित्यर्थः। तृम्फादि। ५४. विध विधाने—विधति वेधा विविधकार्यं। ताडनेऽप्यमनेकार्थत्वात् अतएव कर्णवेधः। ५५-५६. जुड शुन गतौ—जुडति शुनति वा श्वा सत्वरमुच्छिष्ट-मुपभोक्तुं। ५७-५८. पृड मृड सुखने—पृडति मृडति वा विषयो रागिणं। ५९. पृण प्रीणने—पृणति पितृन् तर्पणेन गृही, पपर्ण। ६०, मृण हिंसायां।

मृणति सर्वान् मृत्युः। ६१. द्रुण गतौ च। चकाराद् हिंसायां—द्रुणति दरिद्रं दारिद्र्यागमः, द्रुणः, द्रोणी, द्रोणः। ६२. तुण कौटिल्ये—तुणति तृणं वातः कुटिलयतीत्यर्थः। ६३. पुण शुभे। शुभे शुभक्रियायां पुणति पौराणिकः पुण्यतीर्थे शुभं, निपुणः। ६४. मुण प्रतिज्ञायां—मुणति व्रतं मौनी प्रतिजानातीत्यर्थः. मौनं, मुनिः। ६५. कुण शब्दोपतापयोः—कुणति कोकिलः शब्दायते, कुणति पिकः प्रवासिनं उपतापयतीत्यर्थः। ६६-६७. घुण घूर्ण भ्रमणे—घुणति घुणः भ्रमतीत्यर्थः, घूर्णति घर्मागमे रजनीजागरूकः प्राप्तनिद्रः प्रचलतीत्यर्थः। सामान्येन पठितोऽपि विशेषे वर्तते लोकोपचारात्। ६८. प्रछ ज्ञीप्सायां—पृच्छति पान्थः पन्थानं पथिप्रज्ञं। ६९. सृज विसर्गे—सृजति जगत् जगन्नाथः। ७०. टुमस्जो शुद्धौ। शुध्यतेऽनया शुद्धिराप्लवः—मज्जति उषसि तापसस्तीर्थतोये। ७१. रुजो भङ्गे—रुजति रोगश्चिरं पथ्यभोजिनः। ७२. भुजो कौटिल्ये—भुजति भुजं शयित्वा शय्यायां, कुटिलं करोतीत्यर्थः। ७३-७४. छुप स्पृश संस्पर्शे—छुपति स्पृशति वा बलात् पराङ्गनाङ्गं षिड्गः। ७५-७६. रुश रिश हिंसायां—रुशति रिशति वा रोषादरिसैन्यं वीरः। ७७-७८. लिश विछ गतौ—लिशति विच्छति विच्छायति वा सुखं साधुः। विच्छेस्तुदादिपाठसामर्थ्यात् सार्वधातुकेऽप्यायानित्यत्वं, अन्यथा विच्छायन्तीत्यायव्यवधाने नलोपासिद्धाविहोपदेशोऽनर्थकः स्यात्। केचिदिहोपदेशसामर्थ्यात व्यवधानेऽपि नलोपे विच्छायन्ती विच्छायतीत्याहुः। ७९. विश प्रवेशने—विशति वेश्म ससंभ्रमा वधू गौरवितमभिवीक्ष्य। ८०. मृश आमर्शने—मृशति कृषकोऽवग्राहं। ८१. शक्लृ शातने। शातनमिति ज्ञापकात् स्वार्थे इन्, शतनं शातनं च स्वार्थः, शदिरनीति आत्मनेपदं—शीयते समये तरुः, पततीत्यर्थः। भ्वादिपठितस्य पुनरिह पाठः प्रपञ्चार्थः। स्वरार्थ इत्यपरः। आत्मनेपदानित्यतायां शीयन्ती शीयतीत्येतदर्थमिति कश्चित्। ८२. षदलृ विसरणे—सीदति विषयी विरहेण। ८३. षुर ऐश्वर्यदीप्त्योः—सुरति सुरभौ ( ऋतौ ) कुसुमेषुः, ईष्टे दीप्यते वा इत्यर्थः, सुरः सुरा। ८४. कुर शब्दे—कुरति कुर्कुरः कुर्यते अकुर्छुरोरिति प्रतिषेधान् न दीर्घः, करोतेस्तु प्रतिषेधो लाक्षणिकस्यापि परिग्रहात्। केचिदमुं न पठन्ति,

अन्यथा हि अयमेव प्रतिषेधस्यास्य विषयः स्यात्। ८५. क्षुर छेदने—क्षुरति क्षुरेण केशान् नापितः। ८६. मुर संवेष्टने—मुरति मेरुं प्रदक्षिणमावर्तमानो रविः, मुरः मुरारिः। ८७. खुर विलेखने—खुरति खुरेण क्ष्मां तुरगः। ८८. घुर भीमार्थशब्दयोः—घुरति घोणी जनमेकाकिनं, घुरति पारावतः शब्दायत इत्यर्थः, घोरः। ८९. पुर अग्रगमने—पुरति पौराणां प्रामाणिकः, पुरा, पुरः। ९०. वृहू उद्यमे—वृहति बहुसाधनो धनसाधने। ९१-९३. तृहू स्तृहू तृन्हू हिंसार्थाः—तृहति स्तृहति तृंहति वा विषाणी वर्त्मनि बालं। ९४. इषु इच्छायां—इच्छति विष्णुभक्तः कृष्णभक्तिं। ९५. मिष स्पर्धायां—अन्योन्यं मिषति मेषः। ९६. किल शैत्यक्रीडनयोः—किलति जलेषु केलिमान्, शीतो भवति क्रीडति वेत्यर्थः। ९७. इल गतौ—इलति वेला केलीनां, इला, इल्वला। ९८. हिल हावकरणे। हावः शृङ्गारजो व्यापारविशेषः—हिलति लीलावती पुरतः पतिं। ९९-१०१. शिल षिल उछि उञ्छे—शिलति सिलति उञ्छति वा क्षेत्रे व्रीहीन् तपस्वी चिनोतीत्यर्थः। १०२. तिल स्नेहने—तिलति तैलेनाङ्गमङ्गनायाः स्निह्यतीत्यर्थः। १०३. चिल वसने। वसनमाच्छादनं परिधानमिति यावत्—चिलति चीरं वननिलयः। १०४. चल विलसने—चलति चारुमुखी केलिनिकेतने। १०५. बिल भेदने—बिलति भित्तिं वातः, बिलं। १०६. णिल गहने—निलति नयमनिश्चितबुद्धिः, दुःखेन जानातीत्यर्थः। गहनमिह दुर्बोधनं। १०७. मिल श्लेषणे—मिलति मल्लिकासु सायमामोदः, श्लेषणमिह समृद्धीभवनं न तु व्यापकमालिङ्गनं, मेलः। १०८. लिख लिखने—लिखति लेखकः पुस्तकं, लेखनीयः। कश्चित् कुटस्यादिः कुटादिरिति समासं मन्यमानो लिखनीयं लेखनीयमितीच्छति। १०९. कुट कौटिल्ये। कौटिल्यमिह कुटिलीभावः तत्करणं वा—कुटति कनकस्य गुणं वणिक्, कोटः। ११०-१११. पुट लुट संश्लेषणे। संश्लेषणमिह सम्बन्धभावः—पुटति लुटति वा चाटुर्वटुना (कटीषु पटी)। ११२. कुच संकोचने। समा प्रायेण प्रयोगः—संकुचति कमलमभिसायं। ११३. व्यच व्याजीकरणे—विचति चामरेण चकोराक्षी सखिनं, उरुव्यचाः। ११४. गुज शब्दे—गुजति गमनारम्भे गोमुखं। ११५.

गुड रक्षायां—गुडति मृडो निविडानुरागिणं। ११६. डिप क्षेपे—डिपति रणे बाणं सुधन्वा। ११७-१२१. चुण चुट छुट छुर त्रुट छेदने—चुणति चुटति छुटति छुरति त्रुटति वा तृणं दशनै र्वृषभः। चुणतिरिह कैश्चित् न पठ्यते, अस्य क्विप् दृश्यते चेत् चुण् चुणौ चुण इत्यादि। १२२. स्फुट विकसने—स्फुटति पुष्पं वसन्ते। १२३. मुट आक्षेपप्रमर्दनयोः—मुटति स्तिमितवसनं कृतस्नानः। १२४. तुट कलहकर्मणि—तुटति कटुवाक्यैरन्योन्यमितरजनः। १२५. जुड बन्धे—जुडति चूडां कडारकेशः। १२६. कड मदे—कडति कामुकः। डान्तप्रस्तावे कुटादिप्रयोजनाभावेऽप्युपदिश्यते। १२७. कूड घसने। घसनं मदनं—कूडति कामिनो मलिनमङ्गं तिलकल्केन। अस्यापि कुटादौ न प्रयोजनं। १२८. कुड बाल्ये च। बाल्यमिह शिशुव्यापारः—कुडति सिकताभिः शिशुकः। १२९. घुट प्रतीघाते। तुट कलहकर्मणीत्यतः परमस्यापादानमस्माकं—घुटति घोटकः कटकं परेषां, प्रतिहन्तीत्यर्थः। १३०. तुड ताडने। ताडनमुपहननं—तुडति निविडमुद्गरेण लोष्ट्रं कृषकः। १३१-१३४. थुड स्फुड (स्थुड, रमा) वुड व्रुड संवरणे—थुडति स्फुडति वुडति व्रुडति वा अङ्गं वाससा बाला। १३५. द्रु(भ्रु)ड संघाते—भ्रुडति स्तम्भतृणानि स्थपतिः, गृहाय राशीकरोतीत्यर्थः। कुड बाल्ये च इति पठिताऽपि पुनरिह पाठाऽर्थभेदादिति केचित्, ह्रुड इत्यपरे। १३६. स्फुर स्फुरणे। स्फुरणमिह चलनं प्रकाशो वा—स्फुरति परपरीवादो वदनेऽसाधूनां। १३७. स्फुल सञ्चये च। स्फुरणापेक्षया चकारः—स्फुलति पुष्पं मालिकः। स्फुरेः कपिरिकादित्वेनाङ्गीकारः कथावह इत्यस्य प्रतिपदपाठः। १३८. णू स्तवने—परिणुवति कृष्णं नूतः। १३९. धू विधूनने—धुवति धातकीं वात्या, धूतः। १४०. गु पुरीषोत्सर्गे—गुवति गृह्यभूमौ जनः, गूनः। १४१. ध्रु गतिस्थैर्ययोः—ध्रुवति ध्रुवः स्वर्लोके। परस्मैभाषाः। १४२. गुरी उद्यमे—गुरते गुरुकरवालं शत्रुं हन्तुकामः। १४३. कुङ शब्दे—कुवते अकुत कुतः। केचिदमुं दीर्घं पठन्ति, तदा आकूतमित्यादयः प्रयोगाः, अस्माकं तु कथञ्चित् दीर्घेण समर्थनीयाः। वृत्। कुटादिगणच्छेदाय वृत्करणं। कुङशब्दे इत्यन्तः पञ्चत्रिंशत्

कुटादिः। १४४. पृङ व्यायामे। व्यायामो व्यापारः चेष्टेति यावत्—व्याप्रियते पुण्यवान् धर्मकृत्ये। १४५. मृङ् प्राणत्यागे—म्रियते मर्त्यः कालमासाद्य, मामूर्यते (?)। १४६. दृङ् आदरे—आद्रियते गुरुं परिचर्यया शिष्यः। केचिदमुं मानुबन्धं पठन्ति। १४७. धृङ् अवस्थाने—ध्रियते धर्मः। १४८. जुषी प्रीतिसेवनयोः—जुषते यशो वशी। १४९. ओविजी भयचलनयोः—उद्विजते व्याघ्रात् जनः। १५०-१५१. ओलजी ओलस्जी व्रीडे—लजते लज्जते वा कुलवधूरधि गुरुं। तवर्गपञ्चमादिरयमिति केचित्, तन्मते नग्नो विवासा इत्यस्यैव प्रयोगः, सिद्धान्ते तु वर्णविकारः। अनयोस्तुदादौ फलशून्योऽपि स्वरार्थं इति परः। आत्मनेभाषाः। इति दुर्गसिंहोक्तगणवृत्तौ अगुणान्-विकरणास्तुदादयः समाप्ताः।

(१) कर्तर्यात्मनेपदं भाषायामस्य नाभिधीयते इति कुलचन्द्रः तदनाकरं। (२) नैषधे तु मतान्तरमाश्रित्यात्मनेपदमुक्तं। (३) अतसर्जन दानमाज्ञापनं वा। कथनेऽपि। (६) भट्टभावाद् भुजङ्गानां शिवस्त्वतो निकृष्यत इति दण्डिप्रयोगे क्विबन्तादायो व्युत्पाद्यं एवं न सापेक्षमौचित्यं प्रमाणतोऽपकृष्यते प्रकृष्यते चेति ध्वनावपि। (८) अकर्मकोऽयमिति टीकाकृत् अतः कर्तरि क्तो लुप्तो देवदत्त इति। (११) अस्येदनुबन्धोऽनार्षो निष्फलत्वादिति सारसमुच्चयः। परस्मैपदेऽपि तव्दलाद विकल्पयन्त्यन्ये असेधात्। (१२) परिघातो हिंसा परिताप इति भौमः। (१६) न अपितः नापितः। (२१) तालव्यशकारयुक्तशकारवान्। दन्त्यसकारोपधोऽयमपि भ्रजादिपाठात् न तत् सूत्रकारमतं तत्र षड़ेव गृह्यन्ते। पवर्गीयोऽयं बकार इति टीकाकृत्। (२४) दैवात् ततो विगलितो गिलित वक्रेन इत्यत्रानर्थे कः रलयोरैवात्र स्मरणात् गिल इति स्थिते ततः कारितनिष्ठा। (३१) अन्तस्थवकारोऽयं कारिकायामपठितत्वात्। (३२) निष्ठायां धेति सूत्रे गार्ध्ये पठितोऽपि लुभिरनेकार्थत्वाद् विमोहनार्थोऽपीति टीकाकारसादिहास्य पाठो न युक्तः। (३४) केचित् श्लाघार्थं कथनस्थाने कत्थनमिति पठन्तीति गोविन्दभट्टः। (५१) क्षोभ्यत इति भाष्यकारायं प्रत्युदाहरणं तेन सोपधोऽयं। शृन्भान्तानामिति वदन् वृत्तिकारो सानुषङ्गमेव मन्यते। (५२) अत्र तृत्पाठो नास्त्येव वृत्तौ तृन्फादिसमाप्त्यर्थं शृन्भान्तानामित्युक्तत्वात्। (६१) कौटिल्येऽप्ययमिति केचित्। (६२) तुण चेति पठित्वा चकाराद द्रुण चेति गोविन्दभट्टः। (६३) पुष्पं गच्छतीमुषीक इति कविकल्पलतायम्। (६५) शब्दोपकृत्योः कुणतीति भट्टमल्लः। (७९) अयमोष्ठ्यादिरिति काशीखण्डे गङ्गासहस्रनाम्नि व्याससमयः "विश्वमाता च विश्वेशा विश्वा विश्वेश्वरप्रिया"। (८३) सुर। अन्ये तु षोपदेशं पठित्वा सुषोरित्याह स्वमते तूपलक्षणव्याख्यानात् दन्त्यादित्वं। (८८) भीमार्तशब्दयोः। आर्तं इह शब्दविशेषणं घुरत्यार्ते च कुषते इति शब्दानुवृत्ती भट्टमल्लः। (१०७) वामनस्तु नेमं पठति तन्मतेऽगणपठितत्वात् सिद्धमदः। मिलिः कुटादि-

त्वमिष्यत इति कुलचन्द्रः। अस्यात्मनेपदमपीति धातुप्रदीपादयः, मिलते। (१११) मूर्धन्यवर्गद्वितीयान्तोऽयमिति वोपदेवादयः। (१२७) घसनं भक्षणमिति वोपदेवः। (१३४) व्रुडति अयं संवादार्थ इति कश्चित्। (१३५) हुड ऊष्मवर्गचतुर्थादिरिति रामादयः। (१३६) स्फर इत्येके। (१३७) स्फल इत्येके। स च कडिरिव कुटादौ निष्फलः। (१३८) ह्रस्ववानयं। (१४०) दीर्घान्तोऽयमिति रामः। (१४१) धातुप्रदीपादौ भ्रुवित्यै त्युदाहरणाद् दीर्घान्त एवाभिमत इति कश्चित्।

१. रुधिर् आवरणे—रुणद्धि रुन्धे वा रुधिरं रेणून् रणभूमौ। प्रवेशने अन्तःस्थापनपूर्वकावरणे वा द्विकर्मकोऽयं—ग्राममवरुणद्धि व्रजं। २. भिदिर् विदारणे—भिनत्ति भिन्ते वा वाणेन भटः परहृदयं, भित्तमिति खण्डे निपातः। ३. छिदिर् द्विधाकरणे। द्विधाकरणं क्रियद्वयवविभाग इति पृथग्योगः—छिनत्ति छिन्ते वा छागमस्तकं देव्याः। ४. रिचिर् विरेचने। विरेचनं पौनःपुन्येन पुरीषोत्सर्गः—विरिणक्ति विरिंक्ते वा, व्यरिणक्। ५. विचिर् पृथक्भावे—विविनक्ति विविंक्ते वा युक्त्या पदार्थान् तार्किकः। ६. क्षुदिर् संपेषणे—क्षुणत्ति क्षुन्ते वा उदूखलेन तण्डुलान् गृहिणी, चुक्षुत्सति-ते। ७. युजिर् योगे—युनक्ति युंक्ते वा नेता रणार्थं रथे तुरगान्। ८. उछृदिर् दीप्तिदेवनयोः। देवनं यावद्विवाऽयः क्रीडनमिति केचित् उभयानुबन्धोऽय—छृणत्ति छृन्ते वा वित्तवान् समिता, छर्दिः। ९. उतृदिर् हिंसायां—तृणत्ति तृन्ते वा मृगान् लुब्धकः। १०. कृती छेदने*—कृणत्ति विकर्तनः। ११. शिष्लृ विशेषणे। विशेषणमुपरञ्जनं—विशिनष्टि गुणेन गुणिनं, विशिण्ढि, व्यशिनट्। १२. पिष्लृ संचूर्णने—पिनष्टि वेशवारं गृहिणी *। १३. भञ्जो आमर्दने—भनक्ति भङ्गुरं काष्ठमनायासेन वर्धकिः। १४. भुज पालनाभ्यवहारयोः—भुनक्ति पृथिवीं नृपः, भुंक्ते भक्तं बुभुक्षितः, अशने भुजोत्यात्मनेपदं। १५-१६. तृह हिंसि हिंसायां—तृणेढि परिवृढः परबलं, हिंहि। १७. उन्दी क्लेदने—उनत्ति तूलिका पतिता पानीये। १८. अञ्जू व्यक्तिम्रक्षणगतिषु—व्यनक्ति अतिरिक्तार्थं काव्यस्य टीकाकारः स्फुटीकरोतीत्यर्थः, अभ्यनक्ति तैलेन

---

* कृती वेष्टने। कृणत्ति काव्यकारं कीर्तिप्रकरः तथा च कविरहस्यं यं कृणत्ति गुणग्रामः। कृती छेदने इति पाठं मन्यमानेन कृणत्ति करवालेन बलवदरिशिरो वीर इत्यसदनुप्रासः समासादि। तत्र मिश्रेण मनो न विदधे (टीका)। कृतशिषपिषां यदात्मनेपदोदाहरणानि आदर्शपुस्तके लिखितानि विभाषिताः इत्यनन्तरं परस्मैपदिषु पाठात् स्पष्टमेव प्रमत्तानि तानि।

गात्रं गृहस्थः, म्रक्षयतीत्यर्थः। अनक्ति अनड्वान्, तृणमत्तुं गच्छतीत्यर्थः। १९. तञ्चु संकोचने—तनक्ति नक्तं कमलं। २०. ओविजी भयचलनयोः—विनक्ति विजने जनो दुष्टजन्तुभ्यः। २१. वृजी वर्जने—वृणक्ति विरक्तो ममतां। २२. पृची सम्पर्के—पृणक्ति पोतो जनकस्य पृष्ठं। परस्मैभाषाः। २३. ञिइन्धी दीप्तौ। ञ्यनुबन्धो वर्तमाने क्तार्थः—इन्धे वह्निरिन्धनैः। २४. खिद दैन्ये—खिन्ते दरिद्रः। २५. विद विचारे—विन्ते विद्वान् वेदार्थं मीमांसया। आत्मनेभाषाः। इति दुर्गसिंहोक्तगणवृत्तौ नविकरणा रुधादयः समाप्ताः।

(४) विरेचनं रिक्तीकरणमिति गोविन्दभट्टः। (९) हिंसादानयोः। हिंसानादरयोरिति रुधादिनानार्थे भट्टमल्लः। षष्ठस्वरानुबन्धावेताविति मैत्रेयः (कृद, तृद्)। (१५) तृतीयस्वरानुबन्धोऽयमित्येके। (१९) तञ्चु इति वोपदेवः। (२१) चान्त इत्येके। (२५) रुधादिपरिसमाप्त्यर्थं वृतमधीते मैत्रेयः, पारायणे तु गणसमाप्तिर्नेष्यते अन्यतोऽपि नशब्द इष्यते, तेन लुनति पुनतीत्यादि सिध्यति।

१. तनु विस्तारे—तनाति तनुते वा तन्तून् तन्तुवायः। २. षणु दाने—सनाति सनुते वा गां गुरवे गृहस्थः। ३-४. क्षणु क्षिणु हिंसायां—क्षणाति क्षणुते क्षिणाति क्षिणुते वा राक्षसः सकलं। ५. ऋणु गतौ—ऋणाति ऋणुते वा वनं वानप्रस्थः। ६. तृणु अदने—तृणाति तृणुते वा तृणं वृषभः। ७. घृणु दीप्तौ—घृणाति घृणुते वा दीपः, घृत्वा घर्णित्वा। ८. डुकृञ् करणे—कराति कुरुते वा कार्यं कृती। विभाषिताः। ९. वनु याचने—वनुते धनं दाना धार्मिकेषु। १०. मनु बोधने—मनुते मुनिरात्मानं आत्मनेभाषौ। इति दुर्गसिंहोक्तगणवृत्तौ उविकरणास्तनादयः समाप्ताः।

(२) लाक्षणिकोऽयं णकार इति पूर्णचन्द्रः। उणादिवृत्तौ क्षणपराजि इत्यादिसूत्रे दुर्गसिंहोऽपि। (८) भक्षणार्थोऽप्ययं मधुरसमुषीयागे जाया नवान्नमचीकरन्निति नैषधं। मे गुणित्वेऽप्यकारो वा वक्तव्य इति वररुचिः—किं करोमि कथं कुर्मि क नु गच्छामि माधव। (१०) अत्र वृतमधीते मैत्रेयः।

१. डुक्रीञ् द्रव्यविनिमये—क्रीणाति क्रीणीते वा कनकं वणिक्। २. प्रीञ् तर्पणे कान्तौ च—प्रीणाति प्रीणीते वा पितरं पुत्रः।

*३. श्रीञ् पाके—श्रीणाति श्रीणीते वा यवागूं। ४. स्कुञ् आप्रवणे। आप्रवणमावरणं—स्कुनाति स्कुनीते वा वाटीं वेत्रादिना वास्तव्यजनः। ५-६. षिञ् युञ् बन्धने—सिनाति सिनीते युनाति युनीते वा विषयिणमपराधिनं

* अत्रानन्तरं आदर्शे नास्तीति वृत्तान्तरं लिख्यते इति ममादर्शे अयदेवादपेक्षात् स्पष्टं चैतत्।

कारासु राजा, योष्यति। ७. क्नूञ् शब्दे—क्नुनाति क्नुनीते वा कोकिलः। कुञ् इत्येके, तथा च प्रयोगः—क्रौञ्चचक्रं कुनातीति, एतच्च न दुर्गमतमनुगृह्णाति तथाच न कवतेश्चेक्रीयित इत्यत्र स्वविकरणनिर्देशात् कौतिकुवत्योर्माभूदित्येवाभिदधौ, अन्यथा कौतिकुवतिकुनातीनां माभूदित्येव युज्यते। ८-९. मीञ् द्रूञ् हिंसायां—मिनाति मीनीते द्रूणाति द्रूणीते वा अबलं सबलः कुराजनि देशे। १०. पूञ् पवने—पुनाति पुनीते वा पन्थानं पवनः। ११. लूञ् छेदने—लुनाति लुनीते वा व्रीहीन् कृषकः। १२. स्तॄञ् आच्छादने—आस्तृणाति आस्तृणीते वा तृणैर्भूमिं प्रावृट्। १३. कॄञ् हिंसायां—कृणाति कृणीते वा कुशलं खलः साधूनां। १४. वॄञ् वरणे—वृणाति वृणीते वा पतिंवरा युवानं। केचिदमुं दीर्घान्तं पठन्ति, तदा वूर्ण इत्यादि। १५. धूञ् कम्पने—धुनाति धुनीते वा धात्रीपल्लवं वायुः। ग्रह उपादाने—गृह्णाति गृह्णीते वा वस्तु गृहस्थः सत्तमात। ष्वादिल्वादिषु पाठोऽस्य निष्फलः। केचित गृहः गृह्णवान् गृह्णिरिति छान्दसप्रयोजन इति मन्यन्ते। विभाषिताः। १७-१८. शॄ स्वॄ हिंसायां—शृणाति स्वृणाति वा सिंहः करिघटां, स्वूर्णः। केचित्दवकारमध्यं पठन्ति, तेषां सीर्णः। १९. पॄ पालनपूरणयोः—पृणाति दीनं धन्यमायो धनी, पूर्तः पूर्ण इत्यादि पूरी आप्यायने इत्यस्य। २०-२१. व्ली वॄ वरणे—व्लिनाति वृणाति वा वरं बाला, व्लीनः, वूर्णः औष्ठ्योपधोऽयमिति पुनः पाठः। लवने इति कश्चित्। २२. भॄ भर्त्सने—भृणाति तूर्णं, भकारादिरयं इत्थमेव बोभूर्यत इति (३.५.४३.)। वृत्त्युदाहरणं पञ्जिकायां भॄ भर्त्सन इति धातूत्तोलनं च। एतदविदित्वा हॄ हूर्छणे इति हकारादिपाठं मन्यमानेन मिश्रेण (चतुर्भुजेन) तु अन्यथैव प्रतिपादितं। तथा च हूर्छनं कौटिल्यं—हृणाति अर्थं कुपितं, जह्वार। २३. दॄ विदारणे—दृणाति दारु दासेरकः। २४. जॄ वयोहानौ—जृणाति जरया नरः। २५. नॄ नये—नृणाति नृपतिरुपाय रिपुजये। २६. गॄ शब्दे—गृणाति गिरं गीष्पतिरिव प्रगल्भः। प्रत्यनुपूर्वोऽमुत्साहने—छात्राय प्रतिगृणाति अनुगृणाति उत्साहयतीत्यर्थः। २७. ज्री वयोहानौ—ज्रिनाति युवतिर्जरसान्वितं। २८. ऋ गतौ—समृणाति

दशार्णं वर्णौ। २९. री रेषणे च। रेषणमिह हिंसनं, चकारो गतिमनुकर्षति—रिणाति वनमारण्यकः। आङ्पूर्वोऽयं शोषणे। ३०. ली श्लेषणे—लिनाति ललना लावण्यं। कर्माविवक्षायां लिनाति जलधौ सरित। ३१. ल्वी च। चकारः श्लेषणमनुकर्षति, तर्हि भिन्नयोगो व्यर्थः, सत्यं चकारमकृत्वा एकयोगे एकधातुप्रतिपत्तिः स्यात्। तालव्यमध्योऽयमिति मतिमोदिनी, पकारमध्योऽयमिति मिश्रः—ल्पिनाति, वकारमध्योऽमित्यपरः ल्विनाति। वृत्। प्वादि द्वाविंशतिः प्वादिल्वादिव्यवच्छित्तये वृदित्यर्थः। केचित्तु सन्निहितत्वात् ल्वादिमेव व्यवच्छिनत्ति प्वादिस्त आगणं प्राप्तावपि व्रीभ्री-धातू आद्ययैव निवृत्तिः अन्यत्र प्रयोजनाभावादिति प्रचक्षते। ३२. व्री वरणे—व्रीणाति ऋत्विजं यजमानः। ३३. भ्री भरणे—भ्रीणाति भृत्यं भर्ता। भ्री भये इति केचित्। ३४-३५. णभ तुभ क्षिष् हिंसायां—नभ्नाति तुभ्नाति क्षिणाति वा प्रभुरसमञ्जसजन्तून्। क्षिष् हिंसायामिति भिन्नयोगं वचित्रार्थं कश्चित् कुरुते. क्षिया। ३६. ज्ञा अवबोधने—जानाति जगन्ति भगवान्। चकारोयमनुपसर्गे वेति समुच्चिनोति, तेन जानीते जयदेव एवेत्यादयः प्रयोगाः साधुतामध्यासते। ३७. बन्ध बन्धने—बध्नाति कारायामनुचितकारिणं नृपतिः। ३८. श्रन्थ मोचनप्रतिहर्षणयोः—श्रथ्नाति वत्सं गोरक्षः। ३९. मन्थ विलोडने—मथ्नाति माथुरो दधि, गोधुक्। ४०. ग्रन्थ सन्दर्भे—ग्रथ्नाति मालां मालाकारः। ४१. कुन्थ संक्लेशे—कुथ्नाति कुमारी प्रसवे वधूः। ४२. मृद क्षोदे—मृद्नाति मोदकं कदलेन बुभुक्षितो भोक्तुं। ४३. मृड सुखने—मृड्नाति परिवृढः सुखीभवतीत्यर्थः, मृड्नाति मृडानी मृडमिति सकर्मकोऽपीष्यते। ४४. गुध रोषे—गुध्नाति गोधां प्रति व्याधः। ४५. कुष निष्कर्षे—कुष्णाति कदलीं बालः त्वचं मोचयतीत्यर्थः। ४६. क्षुभ सञ्चलने—क्षुभ्नाति नभस्वता सरस्वान्। ४७. क्लिशू विबाधने—क्लिश्नाति जगदिह दुर्वृत्तः। ४८. अश भोजने—अश्नाति पोतो गुडं। ४९. उध्रस उञ्छे। उदनुबन्धोऽयं दीर्घशङ्कानिरासाय पूर्वं निर्दिश्यते—ध्रस्नाति तपस्वी सस्यमुद्धृतसस्यकेदारे। ५०. इष आभीक्ष्ण्ये। आभीक्ष्ण्यं पौनःपुन्यं, तच्च यद्यपि

पाकादिष्वपि संभवति तथापि सामान्यक्रियावाचिधात्वर्थस्य करणस्यैव इह गृह्यते—इष्णाति वैष्णवो वैष्णवव्रतं पुनः करोतीत्यर्थः। ५१. विष विप्रयोगे—विष्णाति विरक्तः पुत्रकलत्रात्। ५२-५३. प्रुष प्लुष स्नेहनसेचनपूरणेषु—प्रुष्णाति प्लुष्णाति वा वारिवाहो गिरिनदीं। ५४. पुष पुष्टौ—पुष्णाति पुष्या मनोरथं यात्राकृतौ। ५५. मुष स्तेये। स्तेयमिह स्वामिनोऽननुमत्या धनग्रहणं—मुष्णाति दस्यु सर्वस्वं साधूनां प्रान्तरे। ५६. खव भूतिप्रादुर्भावे। अवर्णादूटो वृद्धिरित्यनेन वृद्धिः—खौनाति नीतिमाननुदिनं समृद्धो भवतीत्यर्थ इति मिश्रः। धिनोतीत्यादौ य्वोर्व्यञ्जनेऽय इति वलोपमाचक्षाणस्य पञ्जिकाकारस्य मतं वर्णयन् कश्चित् खनातीत्युदाजहार। अपरश्च कृति व्यञ्जने वलोपं व्याचक्षाणः छ्वोः शूटौ पञ्चमे च इत्यत्रापि छकारेण साहचर्यात् आख्यातिकभिन्नपञ्चमे वस्य ऊटं मन्यमानः खव्नातीत्युदाहरति। सामान्येन मतत्रयं लिखितं तारतम्यविचारेण एतेषु भद्रपक्षः सुमनीषिभिर्ग्राह्यः। परस्मैभाषाः। ५७. वृञ् संभक्तौ। वृणीते मित्रं सत्पुरुषः धनादिना सम्यग्भजतीत्यर्थः। आत्मनेभाषाः इति गणवृत्तौ नाविकरणाः क्र्यादयः समाप्ताः।

(४) चाप्लवने। (६) द्वितीयः श्रिडादिरिति बालिशप्रलापो हेय एव। (१४) दीर्घान्तोऽयमिति रामः ह्रस्वान्तोऽयमिति चतुर्भुजः। (१८) स्टॄ हिंसायां। दन्त्यसकारयुक्तपवर्गीयबकार इति धातुप्रदीपः, तालव्यादिरयमपीति गोविन्दभट्टः। स्टॄ इत्येके स्पृधे स्तृणाति शत्रूनामश्वान् स्तृणाति वारणान् इति हलायुधः। ल्वी गतौ इत्येके। (२०) अवलेपितं व्लेपितमिति वैद्ययमकं। कातन्त्रसूत्रे तु ,वकारं दन्त्यवर्गपञ्चममधीत्यात्रापि तथा कल्पयन्ति स्वल्पमतयः। (२५) स्तृणाति लम्भयति च वर्हत्यपि नयत्यमू इति क्रियानिर्घण्टे। वयो जरायां जरति जृणाति च जिनाति च। चतुर्भुजस्तु वयोग्रहणमपनीय हानावित्याचष्टे। (९) रेषणं वृकध्वनिः रिणाति रेषते वार्कः (वृकशिशुः) इति शब्दानुवृत्तौ भट्टमल्लः। (२६) कथं ततोऽनुजज्ञे गमनं सुतस्य उच्यते उपसर्गप्रतिरूपकत्वात् विभक्तिविपरिणामेन कर्मणि प्रत्यय इति जयमङ्गलः। (४५) मूर्धन्यान्तादस्मात् कलचि कुषली मूर्धन्यवानिति जातरूपः। (४९) स्वाचरो धातुरित्येके तथा च क्र्यादावुध्रस उञ्छ इत्यथ पुनश्चौरादिकः पठ्यते तस्य ध्रासयतीति रूपमपरं ध्रस्नाति येषां ध्रसः। उत्पूर्वस्य गणद्वयेऽपि पठनं तेषां कृते श्नाविधौ उध्रस्नाति निगद्यते णिचि कृते उध्रासयत्यन्यतः। (५१) दन्त्यान्तोऽयमिति विसद्युत्पत्तौ सुभूतिः। (५२-५३) स्नेहनं प्रीतिः। धातुप्रदीपे भट्टमल्लेन मोचने इति दृश्यते। (५७) संभक्तिर्मैत्रीकरणमिति टीकाकृत्।

१. चुर स्तेये—चोरयति चौरः परधनं, चोरयिष्णुः। २. चिन्ति स्मृत्यां—चिन्तयति, चिन्तनं-ना, चिन्ता इनो लोपाभावे चिन्तियेत्यपि। ३. यत्रि संकोचने—यन्त्रयति मन्त्रेण विषवैद्यैः काद्रवेयान्। ४. स्फडि परिहासे—स्फण्डयति सखा सखायं। ५. लक्ष दर्शनाङ्कयोः—लक्षयति वृक्षं पक्षी, पश्यति चिह्नयति वेत्यर्थः। विभाषितोऽयमित्येके इति दुर्गः। तन्मते लक्षयते इत्यपि। ६. भक्ष अदने—भक्षयति पक्षी लक्षितमामिषं। ६. कुद्रि अनृतभाषणे—कुन्द्रयति यन्त्रणया कूटसाक्षी, मिथ्या वदतीत्यर्थः। डान्तोऽयं ऋदनुबन्ध इति मतिमोदिनी, तन्मते कोडयति कुड्या कुल्या इति। ७. लड उपसेवायां—लाडयति लालयति वा बाला बालपाशं, मानुबन्धोऽपि जिह्वा-सेचने—लडयति जिह्वामहिः। ८-१०. मिद तिल ष्णिह स्नेहने—मेदयति तेलयति स्नेहयति तैलेन वर्तिकां प्रदीपकारकः। मिदिरिदनुबन्ध इति केचित्, तन्मते मिन्दयति। ११. ओलडि उत्क्षेपे—लण्डयति पिण्डं श्वानं प्रति शिशुः, लण्डिनः इड्व्यवधानेऽपि निष्ठातो नत्वं ओदनुबन्धबलात्। केचिद्दोकारादिमेवामुं मन्यन्ते, तन्मते ओलण्डयति ओलण्डितः। १२. जल अपवारणे—जालयति भित्तिमन्तगृहदर्शनाय, सविबन्धां करोतीत्यर्थः। १३. पीड अवगाहने—पीडयति निविडस्तनमुरो रागी, दुःखक्रियायामप्ययं—पीडयति पान्थं विरहः, पीडा। १४. नट अवस्यन्दने—नटयति शोणितमवटोः, उन्नाटयति चौरस्येति हिंसार्थोऽपि। १५. श्रथ प्रतिहर्षे—श्राथयति श्रवणेन जन्मनः पुत्रस्य पुत्री, पुनः पुनः हृष्यतीत्यर्थः। प्रतिरोधो हर्षस्येति केचित्। तदा श्राथयति श्रवणेन विपदः पुत्रस्य पुत्री। १६. वध संयमने। संयमनं बन्धनं—बाधयति बन्धनालयेऽपराधिनं अधिपः। १७. पृ पूरणे—पारयति वराकं कृपालुः, शक्तौ च पारयति पराकं कर्तुं तपस्वी। केचिदमुं दीर्घान्तं पठित्वा पुपूर्षतीति मन्यन्ते, तदिह धात्वन्तरेण सिध्यति, ह्रस्वान्त एवायमिति पिपारयिषति, पारय इत्यादि। १८. ऊर्ज बलप्राणधारणे। बलप्राणयोर्धारणं—ऊर्जयति समर्जितवित्तः दुःखेन जीवलोके। १९-२१. चुट छुट कुट्ट छेदने—चोटयति छोटयति कुट्टयति वा दुष्टाधिष्ठितमरणं नराधिपः, छोटिका कुट्टाकः, कुत्सनेऽप्ययमित्येके। २२-२३.

पुट्ट चुट्ट अल्पीभावे—पुट्टयति चुट्टयति वा निदाघस्य वासरे सरसी। २४. मुट संचूर्णने—मोटयति मल्लं बलवान् भटः। २५-२७. स्मिट अट्ट षुट्ट अनादरे—स्मेटयति अट्टयति सुट्टयति वा वटुं वयसाधिकः। २८. घट्ट चलने—घट्टयति घनः समीरणौघेन। २९-३०. छद खट्ट संवरणे—छादयति खट्टयति वा खट्वां प्रच्छदपटेन, प्रच्छदः, छदिः, छद्म, छत्रमित्यादि, खट्टना। ३१-३२. शठ श्वठ संस्कारगत्योः—शाठयति श्वाठयति वा भूमिमुद्युक्तः, शुठि इत्येके, शुण्ठयति। ३३-३६. षट्ट तुजि पिजि पिष हिंसाबलदाननिकेतनेषु—सट्टयति तुञ्जयति पिञ्जयति पेषयति वा समितौ शत्रून् सुभटः। पिसिरयं दन्त्यान्त इति केचित् पेसयति, पटादिदण्डकेऽपि तुञ्जिपिञ्जी पठिष्येते आत्मनेपदार्थं तुञ्जयते पिञ्जयते इत्यादि, अनयोः पुनः परस्मैपदमेव स्यादिति, अन्ये तु अर्थभेदेन द्विःपाठमाहुः। ३७-३८. श्वल्क वल्क भाषणे—श्वल्कयति वल्कयति वा बहु वाचाटः। ३९-४१. श्वर्त ( स्वर्त, राम ) श्रुपि पथि गतौ—श्वर्तयति, अयं कृच्छ्रजीवने इत्येके, श्वभ्र इत्येके, श्रुम्पयति पन्थयति वा पान्थः पन्थानं। ४२. क्षपि क्षान्तौ—क्षम्पयति दीनमनुकम्पकः। ४३. पिच्च कुट्टने—पिच्चयति पिचुमर्दं वर्धकिः। ४४. तड आघाते—ताडयति पोतं कुपितः पिता। ४७-४९. खड खडि कडि भेदे—खाडयति खण्डयति कण्डयति। ५०-५२. नक्क धक्क पशि नाशने—नक्कयति धक्कयति पंशयति वा पांशुवृष्टिः। पसिरयं दन्तमध्य इति कश्चित्, पांसुशब्दोऽपि दन्त्यमध्य इति तन्मतं। ५३-५४. चक्क चुक्क व्यथने—चक्कयति चुक्कयति वा करिकरमङ्कुशेन हस्तिपकः। ५५. पुस्त आदरानादरयोः—पुस्तयति कस्तूरिकां काचित्, पुस्तः पुस्तकं। ५६. क्षल शौचे। शौचमिह शुचीकरणं—प्रक्षालयति पात्रं परिवेशकः, क्षालः। ५७. तल प्रतिष्ठायां—तालयति व्रतं सुकृतिनः सम्पूर्णं भवतीत्यर्थः, सम्पूर्णीकरणेऽपि प्रयोगवशात्। घुषिरविशब्दन इति प्रतिषेधात् विकल्पे नन्ताश्चुरादयः। अपरे तु विशब्दनप्रतिषेधात् चुरादिभ्यो यथाभिधानं इन्प्रत्ययः न विकल्पः सार्वत्रिक इत्याहुः, तालः तलमित्यपि भवति। ५८. तुल उन्माने—तोलयति मानं कामिनां कामः, तोला, तुला, तुलितः इत्यादि विकल्पितेन्पक्षे। ५९. दुल

उत्क्षेपे—दोलयति दोलां दोलावाहकः, दोला, दुलिः। ६०. पृथ प्रक्षेपणे—पर्थयति पृथिवीमबादिभ्यः, भेदेन जानातीत्यर्थः, पर्थयति पायसे घृतं प्रक्षिपतीत्यर्थः। तस्मात् प्रक्षेपणमिह मिश्रणं अमिश्रणं च। अत्रैव प्रथ प्रख्याने इति कश्चित् प्राथयतीत्यादि। अदन्तप्रकरणे तु दृश्यते प्रयोगात्। ६१. शम्ब सम्बन्धे—शम्बयति शम्बलं शम्बूके पाथेयोचितं। अतःपरं षम्ब च इति केचित् पठन्ति, सम्बयति। ६२. चुल निमज्जने—चोलयति चीवरं जलमध्ये, बुल इति कश्चित्। ६३. ष्टूप समुच्छ्राये—स्तूपयति सूपकार ओदनं पक्त्वा। ६४. मूल रोहणे—मूलयति तरुं, रोपयतीत्यर्थः, मूलं, मूलिका। ६५. क्षजि कृच्छ्रजीवने—क्षञ्जयति क्षञ्जः, कष्टं जीवतीत्यर्थः,। ६७. सान्त्व सामप्रयोगे—सान्त्वयति शोकाकुलं सामवादैः, षोपदेशोऽयमिति केचित्। ६८. मान पूजायां—मानयति मान्यमभ्युत्थानादिभिर्विद्वान्। ६९. चुद सञ्चोदने। सञ्चोदनमाक्षेपः—चोदयति चिन्तितमन्यैरन्यः, आक्षिपति खण्डयतीत्यर्थः। ७०-७२. कल पिल डिप क्षेपे—कालयति कालं कौलिकाचारैः कुलवधूः गमयतीत्यर्थः, एवं पेलयति डेपयति। डिल इति कश्चित् डेलयति। ७३-७५. कुडि जसि पल रक्षणे—कुण्डयति जंसयति पालयति वा पृथ्वीं पृथिवीपतिः। ७६. श्लिष श्लेशणे—श्लेषयति विशिष्टं घटकः। ७७-७९. लूष व्रूष वर्ह हिंसायां—लूषयति व्रूषयति निवर्हयति वराहं। ८०. शुन्ध सर्जने—शुन्धयति बन्धुं शुद्धाशयः, सृजतीत्यर्थः। ८१. ज्ञप मानुबन्धश्च—ज्ञपयति ज्ञापने चायमभिधीयते। मारणादिष्वर्थेषु तत्र घटादित्वेनापि सिद्धे कर्त्रभिप्राये क्रियाफले परस्मैपदमिति, पुनर्मारणादिषु मानुबन्धत्वमितीष्यत इति कश्चित् किल हेत्विनन्तात् कर्त्रभिप्राये आत्मनेपदमेव स्यात्। तदयुक्तमिह तस्यानादरात् तत्र हि मारणाद्यर्थे परस्मैपदमेव तत्र हेतावात्मनेपदमपीति प्रयोजनं। ८२. यम च परिवेशने। चकारेण मानुबन्धत्वमपेक्षितमस्योत्तरस्य धातोः—यमयति तेमनमनतिक्रमेण भोजने जननी, परिवेशयतीत्यर्थः। ननु घटादौ यमोऽपरिवेशने मानुबन्धत्वमुक्तं, तत्कथं न विरोधः। सत्यं स्वार्थेऽत्र

मानुबन्धत्वं तत्र हेताविति न दोषः। केचित् घटादौ परिवेशन एव मानुबन्धत्वमाहुः। मन्यते प्रयोजनमिह कर्त्रभिप्रायेण परस्मैपदमपि दर्शितं। ८३. चप कल्कने। कल्कनमिह चूर्णीकरणं—चपयति पाषाणपट्टे तण्डुलान् सूपकारः। ८४. न हेतावन्ये मानुबन्धाः। ज्ञपादिभ्योऽन्ये धातवः अहेतौ स्वार्थे इनन्ते घटादिपठिता अपि न मानुबन्धाः तेन स्यामयते शामयत इत्यादिकमुदाहरिष्यते। ८५. ध्यप क्षेपे—ध्यापयति धूलिमनिलः, अदिध्यपत्। ८६-८७. स्फिट बुधि हिंसायां—स्फेटयति बुन्धयति वा निर्बन्धतो रिपुनेता। बुधीति अन्तस्थादिरयं टवर्गद्वितीयान्तोऽन्यैः पठ्यते बुण्ठयति। ८८-९०. पूल मुस्त पिडि सङ्घाते—पूलयति मुस्तयति पिण्डयति वा तण्डुलान् पिण्डदः। ९१. पुंस अभिमर्दने—पुंसयति कंसे कासमर्दं। डपि डिपीत्येके—डम्पयति डिम्पयति। ९२. टकि बन्धने—टङ्कयति चटकं विटङ्कोपरि पाशिकः, टङ्कः, टङ्ककः। ९३. धूस कान्तीकरणे—धूसयति धनिकाङ्गं मलयजरजः, धूस्तूरः तालव्यान्तोऽयमिति कश्चित्। ९४. कीट बन्धे—कीटयति कापटिकः स्वकृतमनुतापं, कीटः। ९५. चूण सङ्कोचने—चूणयति दुश्चरितेन संभावितः, सङ्कुचितो भवतीत्यर्थः। ९६. तूण पूरणे—तूणयति तूणं शरैर्वीरः। दूर इति केचित्, धातुरेवायं नास्तीति केचित्। ९७. पूज पूजायां—पूजयति विजयां विजयकामः। ९८-९९. अर्क ईड स्तवने—अर्कयति ईडयति वा मृडानीं चाण्डः। १००. शुठ आलस्ये—शोठयति मठे कठः, अलसो भवतीत्यर्थः। १०१. शुठि शोषणे—शुण्ठयति कण्ठं कठिनतरातपागमः, शुण्ठा, शुण्ठी। १०२-१०३. जुड चूर्ण प्रेरणे—जोडयति जोलयति वा जलं प्रणाली। चूर्णयति चूर्णेन तैलं पात्रस्य लेखकः, बूर्ण इत्यपरे। १०४-१०५. गर्ज मार्ज शब्दार्थौ—गर्जयति मार्जयति वा मृदङ्गं मार्दङ्गिकः, गुज इत्येके, गोजयति। १०६. पचि विस्तारवचने—प्रपञ्चयति पञ्जिका वृत्त्यर्थं। प्रपञ्चना, पंक्तिरिति इनो विकल्पात्, धात्वन्तरेणेति त्रिलोचनः, पञ्जिकेति वर्णविकारात्। १०७. तिज निशाने—तेजयति राजकरवालं कर्मकारः। १०८. कृत संशब्दने—कीर्तयति कीर्तिं कविर्नृपस्य, कृत

इति ह्रस्वमध्य इति कश्चित्। १०९. वर्ध छेदनपूरणयोः—वर्धयति दुराधर्षं रिपुं रणभूमौ वीरः, वर्धयति गर्धनं धनेन दाता। ११०. कुबि छादने—कुम्बयति तुमुलेन संग्रामभूमिं प्रबली। १११-११२. लुबि तुबि अर्दने—लुम्बयति तुम्बयति वा वैरिणं विजिगीषुः, लुम्बा, तुम्बा। तुपीत्येके—तुम्पयति, तुम्पा। ११३. ह्लप व्यक्तायां वाचि—ह्लापयति होता हविराधानमन्त्रं। ह्रप इति कश्चित्, ह्रापयति। ११४. म्लेछ च। पूर्वार्थानुकर्षणाय चकारः भिन्नयोगो विचित्रार्थः—म्लेच्छयति म्लेच्छः कुत्सितपदं। ११५. चुटि छेदने—चुण्टयति चेटिकाकेशान् परार्थं साधुः। ११६. म्रक्ष म्रक्षणे। म्रक्षणं कठिनस्य द्रवेण संयोजनं—म्रक्षयति भक्षितुं भक्तममृतेन दीनः। ११७. इल प्रेरणे—एलयति बलात् मल्लान्तरं मल्लः। ११८. लुण्ट स्तेये—लुण्टयति लुण्टाकः कान्तारे परसर्वस्वं। द्वितीयान्तोऽयमिति कश्चित्, लुण्ठयति। ११९. छर्द वमने। वमनं उद्गरणं—छर्दयति अर्दितो रोगेण भूक्तमन्नं। १२०. सूर्प माने—सूर्पयति सूर्पेण धान्यं विक्रेता, मातीत्यर्थः। १२१. गुडि वेष्टने—गुण्डयति मण्डलं गुण्डिकाभिर्व्रती। चूर्णीकरणेऽप्येवं वर्तते शिष्टप्रयोगात्। १२२. बल भृतौ। भृतिरिह पोषणं—बालयति बालं जननी। १२३. गर्ध अभिकाङ्क्षायां—गर्धयति वार्धकेऽपि लुब्धो धनं। १२४. पूर्व निकेतने। निकेतनमिह निमन्त्रणं निवासो वा—पूर्वयति सर्वान् भोक्तुं दानपतिः, पूर्वयति सर्वं इह निर्वृतिवाञ्छया। १२५. रुष रोषे—रोषयति रिपवे राजा। १२६. मडि भूषायां हर्षे च—मण्डयति मण्डनेन कपोलं कलावती। १२७. श्रण दाने—विश्राणयति धनमर्थिने धार्मिकः। हेतौ घटादिरयं, विपूर्व एवास्य प्रयोगः प्रायेण। १२८. भडि कल्याणे। अयं प्रतारणेऽर्थे भाषायां रूढः कल्याणभावना तु छन्दोऽनुरुध्य उक्ता. भण्डयति प्रतारको लुब्धं धनदानाङ्गीकारेण। मडिधातोः परतोऽस्य पाठो न्याय्यः। मडिप्रभृतीनां गणान्तरपठितानां चण्यविशेषरूपाणामेकार्थानां घञन्तत्वेन नामधातूनां रूपसिद्धाविहोपदेश उभयपदप्रतिषेधपरः प्रतिज्ञायते। १२९. वज मार्गणसंस्कारे। मार्गणं ( णः ? ) बाणः, तस्य संस्कारः पक्षादिना, तत्र वाजयति बाणान् पक्षैः

काण्डकारः। गतावपि केचित्। १३०. व्युष उत्सर्गे—व्योषयति घासं सन्नग्रासो, प्युष इति त्रिलोचनः। १३१. जसु हिंसायां—चौरस्योज्जासयति, जस इति कश्चित्। परस्मैभाषाः। एते चुरप्रभृतयो परस्मैपदिनः नत्विनन्तत्वादुभयपदिन इत्यर्थः। १३२. तन्त्रि कुटुम्बधारणे। कुटुम्बपोषणमर्थो न प्रायिकः, विस्तारणेऽस्य बहुप्रयोगः—तन्त्रयते तन्तून् तन्तुवायः। १३३. मन्त्रि गुप्तभाषणे—मन्त्रयते मन्त्रिभिः कर्तव्यमर्थं नायकः। १३४-१३५. वस्त गन्ध अर्दने। अर्दनमिह गतिहिंसायाचनार्थकमेव यथाप्रयोगमुदाहरणं। वस्तयते गन्धयते वा सिन्धुः सिद्धं। १३६. हिक्क हिंसायां—हिक्कयते वृकः पथिकजनं, हिष्क इत्येके, हिस्क इत्यपरे। १३७. णिष्क परिमाणे—निष्कयते सुवर्णं बणिक्, प्राणिनिष्कत्। १३८. लल ईप्सायां—लालयते ललनां लावण्यवतीं युवा। १३९. चित संवेदने—चेतयते चिन्तितमर्थमचपलः। १४०. दशि दंशने—दंशयते दन्दशूकः पथि रात्रौ पथिकं। १४१. दसि दर्शने च। चकारात् दंशने च—दंसयते बंशाग्रे नृत्यन्तं नटं दानपतिः। १४१. हूण ( कूण ? ) संकोचने—हूणयते हूणः कराघातेन, सङ्कुचितो भवतीत्यर्थः, अजुहूणत्। १४२-१४३. डप डिप संघाते—डापयते डेपयते वा नावं नाविकः। डपि डिपीत्येके डम्पयत इत्यादि। १४४. तूण पूरणे—तूणयते तूणीरं बाणेन धानुष्कः। १४५. स्पश ग्रहणश्लेषणयोः—स्पाशयते। भाषायां प्रयोगोऽस्य दृश्यत इति कश्चित्। त्रिलोचनदासमते पुनर्नास्त्येवेति लक्ष्यते यतस्तस्यैव धातुवृत्तौ अयं कैश्चित् पठ्यत इत्युक्तं। १४६. तर्ज भर्त्स सन्तर्जने—तर्जयते भर्त्सयते वा जनमनाचारस्थं राजा, तर्जना, भर्त्सना। १४७. भ्रूण आशायां—भ्रूणयते भद्रं भव्यः। १४८. यक्ष पूजायां—यक्षयते यक्षराजं धनतृष्णक्। १४९. शठ श्लाघायां—शाठयते शठ आत्मानं। १५०. स्यम वितर्कें। न्यासकारस्तु श्यालशब्दस्य व्युत्पत्तये श्याल वितर्के इति मन्यते—स्यामयते दूरे पथि महिषं गोत्वेन। १५१. गूर उद्यमे—उद्गूरयते मुद्गरं चौरो हन्तुं। गूर भक्षणे इति केचित्, गुरी उद्यमे इति केचित्। १५२-१५३. शम लक्ष आलोचने—शामयते लक्षयते वा सर्वप्रयोजनममात्यप्रधानं। १५४. कुत्स

अवक्षेपणे। अवक्षेपणमिह निन्दा—कुत्सयते मत्सरतां स्वच्छमतिः, कुत्सः, कुत्सा। १५५. भल आभण्डने—भालयते इङ्गितेन भामिनी अभव्यं। निपूर्वोऽयं निरूपणे। १५६. कूट अप्रसादे—कूटयते कापटिकः स्फुटमप्यर्थं। कुट प्रतापन इति कश्चित्, कोटयते। १५७. वञ्चु प्रलम्भने—वञ्चयते कश्चिदर्थिनं कृपणः। १५८. धृषु शक्तिबन्धने—धर्षयते धार्मिकं दुष्टः, वृषु इति कश्चित्। १५९. मद तृप्तियोगे—मादयते मदिरया मत्तः। १६०. दिवु परिकूजने—देवयते गर्भदुःखिता। वञ्चुप्रभृतेरुदनुबन्धत्वं स एव धातुरर्थान्तरे चुरादिरिति ज्ञापनार्थं इदं नातिप्रयोजनमिति नानुबन्धमुदाहरन्ति वृद्धाः, तदसाधु समधिगच्छामः। १६१. गॄ विज्ञाने—गारयते गुरुतः सूक्ष्ममर्थमभियोगी। १६२. विद वेदनाख्याननिवासेषु—वेदयते विद्धः व्यथत इत्यर्थः, निवेदयते स्वार्थं आख्यातीत्यर्थः, वेदयते तीर्थे वसतीत्यर्थः। १६३. मन स्तम्भे—मानयते मन्त्रादिना शत्रुं स्तभ्नातीत्यर्थः। १६४. यु जुगुप्सायां—यावयते युवती जरन्तं। १६५. कुस्म कुस्मयने—कुत्सितं स्मयनं कुस्मयनं—कुस्मयते विस्मयपराऽप्यविदग्धा। आत्मनेभाषाः। एते तत्रिप्रभृतयः कुस्मान्ता आत्मनेपदिन इत्यर्थः। आगर्वादात्मनेपदीत्यतोऽनन्तरं चर्चादयः स्तेनान्ता अपि जसु हिंसायामित्यतः पूर्वगणे पठितुं युज्यन्ते। तद्विचारतयैवाप्रेक्षापूर्वकारिणां पूनरुभयपदवेदिनां परस्मैपदविभागाय द्विधोपदेश एव साधीयानिति। १६६. चर्च अध्ययने—चर्चयति निश्चितमतिर्विद्वान्, चर्क इति कश्चित्। १६७. बुक्क भाषणे—बुक्कयति वाचालो बहुनि वचांसि। १६८. शब्द उपसर्गादाविष्कारे च। शब्द इत्ययं धातुरुपसर्गात् पर आविष्कारे भाषणे च चुरादिरित्यर्थः। प्रशब्दयति गभीरमर्थं स्फुटीकरोति भाषते वेत्यर्थः। अन्यत्र शब्दायति शब्दयति वा शाङ्खिकः। भाषणाविष्काराभ्यामन्यत्र सोपसर्गस्य प्रयोगवारनार्थमिदं। यद्येवं कृश्विमण्डीत्यादिसूत्रे शब्द इति लिङ्गमिनन्तं चौरादिकमित्येक इति कथमुक्तं वृत्तिकृता। सत्यं एवं योजनीयं लिङ्गमिनन्तं, तत्र शब्दन इति न पुनश्चौरादिकपक्षेऽपि शब्दन इति। १६९. कण निमीलने—काणयति अक्षिकाणः। १७०. जभि नाशने—जम्भयति स्मरं

शम्भुः। १७१. षूद आस्रवणे—सूदयति मदिरा शौण्डिकभाण्डात्। क्षरणे इत्येके। १७२. जस ताडने—जासयति शिशुमध्येतुं पिता। हिंसायां पठितोऽपि पुनरर्थभेदात् पठ्यते। १७३. पश बन्धने—पाशयति पशुं पशुपालः। १७५-१७६. चट स्फुट भेदे—उच्चाटयति नवोढां पत्युः सपत्नी, आस्फोटयति भटमुत्कटो मातङ्गः। इनो विभाषामङ्गीकृत्य चटति स्फुटतीत्याद्यप्युदाहरन्ति। १७७. घट सङ्घाते—घाटयति कवाटं द्वारि दौवारिकः। अनेनैव सिद्धे कथं उद्घाटितकवाट इति ( ३. ४. ६५ ) वृत्तिकृता सिद्धान्तान्तरमुक्तं, नन्वसिद्धेः। १७८. हन्त्यर्थाश्च। येऽपि हन्त्यर्था यत्र कुत्र पठ्यन्ते तेऽपि चुरादौ पठितव्याः। अत्रैव घातयति हिंसयति तर्दयति। अन्ये त्वेवं व्याचक्षते—चटप्रभृतयो हन्त्यर्था अपि चुरादय इत्यर्थः। ते अजीघतदित्यादि स्वार्थेनं मन्यन्ते। अनेनैव सिद्धे अन्येषां तु हिंसार्थानां चुरादौ पाठ आत्मनेपदादिह रूपभेदार्थः। १७९. दिवु अर्दने—देवयति दरिद्रः, परं गच्छति याचते वेत्यर्थः। १८०. अर्ज प्रतियत्ने—अर्जयति परिजनो जलं ( धनं, रमा. )। १८१. घुषिर् विशब्दने। विशब्दनमिह भाषणं आविष्करणं विविधशब्दनं वा—घोषयति गूढमर्थमभियुक्तः। क्षुभिवाहीत्यत्र विशब्दनप्रतिषेधात् चुरादाविन् विभाषया भवति इति ज्ञाप्यते, तेन जुघुषुः पुष्पमाणवा इति। १८२. आङः क्रन्द सातत्ये। आङ्पूर्वः क्रन्दधातुः सातत्ये चुरादिरित्यर्थः, आक्रन्दयति। अन्ये तु क्रन्दसातत्ये इत्यर्थनिर्देशः घुषिरनुवर्तते, तेन आघोषयतीत्यादि। १८३. लस शिल्पयोगे—लासयति कुशलो लास्ये। १८४-१८५. तसि भूष अलङ्कारे—तंसययि भूषयति वा यौवनमङ्गनां। १८६. मोक्ष असने—मोक्षयति लक्ष्मीवान् आत्मदुःखं क्षिपतीत्यर्थः। १८७. अर्ह पूजायां—अर्हयति हर्षेणातिथिमातिथेयः। १८८. ज्ञा नियोजने—आज्ञापयति भृत्यान् स्वामी। १८९. शृधु प्रहसने—शर्धयति वृद्धं कुत्सितशब्देन शिशुः, हसतीत्यर्थः। १९०. भज विश्राणने—भाजयति भोगं भृत्याय भूपतिः। १९१. यत निकारोपस्कारयोः—यातयति तनयमध्येतुं ताडयतीत्यर्थः, यातयति तामसे लतां उपस्करोतीत्यर्थः। १९२. निसश्च प्रतिदाने। प्रतिदानं विनिमयः

परीवर्त इति यावत्—माषान् निर्यातयति तिलान् दत्त्वा, अथवा तिलमाषयोर्निर्यातयति अत्रापि परीवर्तयतीत्यर्थः। निर इति पाठान्तरं। १९३. वस स्नेहनच्छेदनावहननेषु—वासयति तिलान् इति स्नेहने, वासयति वृक्षान् इति छेदने, वासयति रिपून् इत्यवहनने। १९४. चर असंशये—विचारयति विद्वान् आत्मानं। धातुपारायणिकस्तु चर संशये इति पठति, विचारणा हि संशये भवतीति मन्यते। १९५. च्यु हसने—च्यावयति व्रीडारहितं सर्वः, हसतीत्यर्थः। सहने इति कश्चित्—च्यावयति शरान् सहत इत्यर्थः।* १९६-१९७. भू कृप अवकल्कने—भावयति कल्पयति वा भृत्यस्य वृत्तिं स्वामी। अवकल्कनमिह दानं। केचित् भूकृप इति पञ्चमीं मन्यन्ते। १९८-१९९. रक लक आस्वादने—राकयति लाकयति वा लड्डुकं बालः, राकयतिना लत्वे लाकयतीत्यादि शक्यसाधनमपि कपिरिकादेः प्रपञ्चार्थमेव लकेरुपादानं। रग लग इति केचित्। २००. अञ्चु विशेषणे—अञ्चयति प्रपञ्चना प्रपञ्चं विशेषयतीत्यर्थः। पूर्वक एवायं अर्थान्तरे चुरादिरिति बाधाय उदनुबन्धता, तेन सत्यपि धातोरनेकार्थत्वे स्वार्थेनन्तता अन्यत्र नास्ति। २०१. लिगि चित्रीकरणे—लिङ्गयति अङ्गं रङ्गभूमौ नटः, चित्रीकरोतीत्यर्थः। २०२. मुद संसर्गे—मोदयति सक्तून् सर्पिषा। २०३. त्रस वारणे—त्रासयति पशून् सस्यक्षेत्रात्। २०४. उध्रस उञ्छे—ध्रासयति धान्यमुद्धृतं सस्यकेदारे तापसः। पूर्वक एवायं धातुश्चुरादिरिति प्रतिपत्तये उदनुबन्धत्वं। कैश्चिदसौ न पठ्यते। २०५. मुच प्रमोचने—मोचयति मुद्रां वणिक्। २०६. आ स्वदः सकर्मकात्। स्वद आस्वादने इति वक्ष्यते, तेनैव सिद्धे नियमार्थमिदं। अस्माद् धातोः सकर्मकक्रियावचनादेव इन् भवति अकर्मकक्रियावचनात् न भवति। शाकटायनस्तु आङ्पूर्वात् स्वृ ( स्वद ? ) धातोः सकर्मकक्रियावचनादिन् भवतीति व्याख्याति—आस्वादयति यवागूं योषित्। २०७. ग्रस ग्रहणे—ग्रासयति लगुडमग्रेसरः, ग्रसने इत्येके। २०८. पुष धारणे—पोषयति पाषण्डः कुण्डलं शङ्खस्य। २०९. दल विदारणे—दालयति दारु

* च्यु च्यावयति विच्यावयिषति इत्यादि पुस्तकपाठो लेखकप्रमादज इव लक्ष्यते।

वर्धकिः। २१०-२४०. पट पुट लुट तुजि पिजि लुजि भजि लघि त्रसि पिसि कुसि दसि दशि क्रुशि ( कुशि, रमा ) घट घटि बृहि वल्ह वर्ह गुपू धूप विछ चीव पुथ लोकृ लोचृ णद कुप तर्क वृतु वृधु भाषार्थाः—पाटयति पटुः स्पष्टं भाषत इत्यर्थः, पोटयति, लोटयति, तुञ्जयति, पिञ्जयति, लुञ्जयति। अयमन्यैर्न मन्यते, भञ्जयति, लङ्घयति, त्रंसयति, पिंसयति, कुंसयति क्रसीत्येके क्रंसयति, दंसयति, दंशयति, क्रुंशयति। अयमन्यैर्न पठ्यते—घाटयति सकर्मकार्थमविशेषार्थं च पुनरिह पठनं, केचिन् न पठन्त्येव। घण्टयति घण्टा, बृंहयति बृंहा, वल्हयति, वर्हयति, गोपयति, धूपयति, विच्छयति, चीवयति चीभयति इति केचित्, पोथयति, लोकयति, लोचयति, नादयति, कोपयति, तर्कयति वर्तयति, वर्धयति। केचिदिहेमं न पठन्ति अन्यैश्च गणान्तरेषु पठितत्वात्। अत्र दण्डके पाठात् धातव एवार्थान्तरेषु प्रत्युदाह्रियन्ते—दंशति दंसति कुंसति तर्कतीत्यादि। २४१. पूरी( पूर, रमा ) आप्यायने—पूरयति प्रावृट् पयोभिर्नदीः। २४२. रुज हिंसायां—रोजयति निजं ओजसा दुर्वृत्तः, अयमन्यैर्न पठ्यते। २४३. स्वद आस्वादने—स्वादयति द्राक्षामतीक्ष्णः, अन्यस्तु संवरणे पठति। अतोऽदन्ताः। कथादयोऽघपर्यन्ता धातवोऽकारान्ता अतो नोपधाया दीर्घः स्थानिवत्त्वात् न पुन र्दीर्घविधिं प्रति तत्त्वाभावे ह्रस्वाभावः प्रयोजनं ऋदनुबन्धकरणात्। २४४. कथ वाक्यप्रबन्धे—कथयति कथां पौराणिकः, अचकथत्। २४५. वर ईप्सायां। वरयति वरं स्वयंवरा आत्मानुरूपं। २४६. गण संख्याने—गणयति गुणिनमग्रे विज्ञः। २४७. शठ श्वठ सम्यग्भाषणे—शठयति श्वठयति वा वावदूकः सम्यग्भाष इत्येके। २४८-२४९. पट वट ग्रन्थे—पटयति वटयति वा वटुर्मालां। २५०. रह त्यागे—रहयति विरहे स्नेहो रागिणमपि। २५१-२५२. स्तन गद देवशब्दे। देवशब्दो मेघध्वनिरिति सुभूतिः—स्तनयति गदयति वा जीमूतः प्रावृषि। २५३. पत गतौ—पतयति पतयालुः पक्षी नभः। चुरादेरिन् विभाषा यथाभिधानमित्युक्तमेव, पतति, अपतीत्। अन्यस्तु विकल्पार्थं वा शब्दमभिदधाति। २५४. पष अनुपसर्गात्—पषयति पार्श्वं यूनो युवतिः,

पषु ? इत्येके। २५५. सुर आक्षेपे। स्वरदन्त्यपरा इत्यत्र एकस्वरवर्जनात् अनेकस्वरसुरधातोर्न षोपदेशत्वं—सुरयति असुरान् संग्रामे। २५६. रच प्रतियत्ने—रचयति रुचिरं वचो वाग्मी, रचना। २५७. कल गतौ संख्याने च। चकारो गत्यापेक्षया—कलयति कमलानि मधुपावली। २५८. चह परिकल्कने। परिकल्कनं चूर्णनं—चहयति हयः खुरक्षेपेण लोष्टकं, चहः। चह आलोचने लौकिक एव—चहयति जनः कश्चित्। २५९. मह पूजायां—महयति महात्मा महादेवं। २६०-२६२. शार कृप श्रथ दौर्बल्ये—शारयति कृपयति श्रथयति वा भावं वृद्धेषु युवतिः। कण कृप श्रथ दौर्बल्ये इति केचित्, कृपणः। २६३. स्पृह ईप्सायां—स्पृहयति पुष्पेभ्यः कामिनी। २६४. भाम क्रोधे—भामयति भूपतिर्भृत्याय। २६५. सूच पैशुन्ये—सूचयति रुचिः आरोग्यं। मनोज्ञापनं पैशुन्यं। पशुन्यमन्तर्द्रोह इति केचित्—सूचयति सज्जनमसाधुः, अन्तर्द्रुह्यतीत्यर्थः। २६६. खेट भक्षणे—खेटयति खे कीटं खोरः, खेटना, डान्त इत्येके। २६७. खोट क्षेपे—खोटयति खलमखिलो लोकः, शोट इत्येके। २६८. गोम उपलेपने—गोमयति गोमयेन प्राङ्गणं गृहिणी। २६९. कुमार क्रीडायां—कुमारयति कुमारः, कुषू ( सू, रमा )ल क्रीडायामिति केचित्। २७०. शील उपधारणे—शीलयति नीलनिचोलमभिसारिका। २७१. साम सान्त्वने। सान्त्वनं प्रियकरणं—सामयति सम्यग्दानेन परमतिवलिनं नृपतिः। २७२. वेल कालोपदेशे—वेलयति कालमियत्तया एतावती वेला इति कथयतीत्यर्थः। काल इत्यपि धातुरपरेण निगद्यते कालयति। २७३. पल्यूल लवनपवनयोः—पल्यूलयति केदारं लुनातीत्यर्थः, पल्यूलयति धान्यं पूतं करोतीत्यर्थः। २७४. वात गतिसुखसेवनयोः—वातयति पथिकं निदाघे शीतो वायुः, वातयति बहुभोगं वातुलः सेवत इत्यर्थः। वात गति-सुखे इति केचित्, सेवने इति केचित्, गतिमपनीय सुखसेवने इति केचित्। २७५. गवेष मार्गणे—गवेषयति गा गोरक्षको वने तिरोहिताः। २७६. वास उपसेवायां—वासयति वसनानि धूपधूमः। २७७. निवास आच्छादने—निवासयति वसनेन जघनं युवतिः, अनिनिवासयत्। २७८. भाज पृथक्-

कर्मणि—भाजयति भ्रातृवर्गः पैतृकधनं। २७९. सभाज प्रीतिसेवनयोः—सभाजयति सज्जनो भगवन्तं। अन्यः सेवनेस्थाने दर्शनं पठति। २८०. ऊन परिमाणे। परिमाणमिह अल्पपरिमाणं प्रथमपरिमितात्—ऊनयति, न्यूनः परिहाणे इत्येके। २८१. ध्वन शब्दे—ध्वनयति मधुरिका, हेतौ ध्वनयति वेणुं, अयमन्यैर्न पठ्यते। २८२. कूट दाहे—कूटयति कपटेन खलः सज्जनमनः। २८३-२८४. केत ग्राम कुण गुण चामन्त्रणे। आमन्त्रणं गूढभाषणं, चकारात् कूटश्च—केतयति, ग्रामयति, कुणयति कण इति कश्चित्, गुणयति। २८५. स्तेन चौर्ये—स्तेनयति धनं कागारिकः। परस्मैभाषाः। चर्चप्रभृतयः स्तेनपर्यन्ताः परस्मैपदिन इत्यर्थः। आगर्वादात्मनेपदी। पदप्रभृति गर्वपर्यन्तो धातुरात्मनेपदीत्यर्थः, जातौ एकवचनं। ततः परमुभयपदिनो मन्तव्याः। २८६. पद गतौ—पदयते पदा पदातिको योद्धुं। २८७. गृह ग्रहणे—गृहयते गृहिणीं गृहाभियोगं, अजगृहत, गृहयालुः। २८८. मृग अन्वेषणे—मृगयते मृगं मृगयुः। २८९. कुह विस्मायने—कुहयते कुहकेन कोकान्। २९०-२९१. शूर वीरविक्रान्तौ—शूरयते वीरयते वा वीरः संग्रामे विक्रमत इत्यर्थः। २९२. स्थूल परिबृंहणे—स्थूलयते वातुलमतिसौहित्यं, तवर्गद्वितीयोऽयं। २९३. अर्थ उपयाच्ञायां—अर्थयते अर्थं। २९४. सत्र सन्तानक्रियायां। सातत्येन करणं त्यागस्येति लोकोपचारात्—सत्रयते दानपतिर्दीनेभ्यः। २९५. संग्राम युद्धे—संग्रामयते वीरः परबलेन, अससंग्रामत। सोपसर्गोपदेशो ज्ञापयति समुदायात् प्रत्ययेऽपि नाममात्रस्य धातुसंज्ञान सोपसर्गसमुदायस्य तेन समवर्षयत् अभ्यहस्तयदित्यादि। परस्मैपदिनं कश्चित् पठति दुर्गसिंहस्तु शाकटायनमतानुसारी आत्मनेपदमेव मन्यते। तथा च कर्तुरायिः सलोपश्चेति तत्रोक्तं ननु कथं नियमः संग्राम युद्धे इति चुरादावात्मनेपदार्थः पाठः। २९६. गर्व माने—गर्वयते वित्तेनातिरिक्तः। अथ उभयपदिनः प्रतिपत्तव्याः। २९७. सूत्र अवमोचने। अवमोचनं वेष्टनं—सूत्रयति-ते गृहभूमिं सूत्रेण स्थपतिः। अवमोचनं ग्रन्थनमिति कश्चित्, कस्यचिन्मते विमोचने इति पाठः। २९८. मूत्र प्रस्रवणे—मूत्रयति-ते बालः शय्यायां, मोमूत्रते। २९९. रूक्ष पारुष्ये—

रूक्षयति-ते केशः शुद्धस्नानेन, पारुष्यमस्निग्धता। गर्वरूक्षप्रभृतेरदन्ततोपदेशो विकल्पितेनपक्षे चेक्रीयितनिवृत्त्यर्थः। वेक्ष दर्शने इत्येके, वेक्षयति। ३००-३०१. पार तीर कर्मसमाप्तौ—पारयति तीरयति वा व्रतमभियुक्तः, पारणं-णा, तीरणं-णा। ३०२. पुट संसर्गे—पुटयति-ते पुष्पं बहिर्गलेन। ३०३. कत्र शैथिल्ये—कत्रयति-ते उदकेन सिन्दूरघटिका। ३०४. अंश समाघाते—अंशयति-ते वस्तु वणिक्, स्वंश ? इत्येके, असस्वंशत्। ३०५. चित्र चित्री-करणे। आलेख्यादिकरणे—चित्रयति प्रतिमां चित्रकरः। कदाचिद्दर्शने च। पूर्वापेक्षया च चित्रयति सुचरितावदानं जनः, कदाचित् पश्यतीत्यर्थः। ३०६. वट विभजने—वटयति-ते वा वटुर्वटकान्। इदनुबन्धोऽयमित्येके। ३०७. लज प्रकाशने—लजयति-ते वा लाजाव्रजः, प्रकाशत इत्यर्थः। एतौ इदनुबन्धौ कैश्चित् पठ्येते—वण्टयति लञ्जयति, अनयोरिदनुबन्धयोरदन्ततावलादन्त्यस्याप्यकारस्य इनि दीर्घस्ततः पकारागमः, वण्टापयति लञ्जापयतीत्युदाहरति। ३०८. मिश्र सम्पर्के—मिश्रयति-ते गुडेन धानाः मिश्रं करोतीत्यर्थः। दन्त्यान्त इति कश्चित्। ३०९. स्तोम श्लाघायां—स्तोमयति-ते वस्तु तत्त्वार्थवित्, अग्निष्टोमः, संघाते इति कश्चित्। ३१०-३११. छिद्र कर्ण भेदे—छिद्रयति कर्णयति वा कलसीं लोष्टेन, आकर्णयति श्रवणे, अथवा कर्णेनाभाषते इति इन् इति केचित्। ३१२. अन्ध दृष्ट्युपसंघाते—अन्धयति जन्मतो दुर्दैवहतकः। दृष्ट्युपसंहारे इति केचित्। ३१३. दण्ड दण्डनिपातने—दण्डयति-ते पण्डितसंमत्या नृपतिरपराधिनं। दण्डप्रभृतेर्लिङ्गात् इन् कारितं धात्वर्थे इति सिद्धमेव चुरादिपाठाद् यथाभिधानं इनमन्तरेणापि प्रयोगाः, नन्वविशेषादिति फलाभावे सतीह वेदितव्यं। ३१४. अङ्क लक्षणे—अङ्कयति कुङ्कुमेन कामिनी कुचं, अचिङ्कयिषति। अङ्ग लक्षण इति केचित्। ३१५-३१६. सुख दुःख तत्क्रियायां—सुखयति प्रियोपगमः, दुःखयति दुर्वचनदुर्वादः। ३१७. रस आस्वादनस्नेहनयोः—रसयति सितां मधुरप्रियः, रसययि सुधा ( युवा, रमा ) योषिति स्निह्यतीत्यर्थः। ३१८. व्यय वित्तसमुत्सर्गे—व्ययति-ते वित्तं बहु-दाता। ३१९. रूप रूपक्रियायां। रूपक्रिया राजपुत्रादिरूपस्य करणं रूप-

दर्शनं वा—रूपयति प्रतिमायां चित्रकरः, निरूपयति रूपं दर्पणे। निपूर्वो विचारणे—निरूपयति परमार्थमभियुक्तः। ३२०. छेद द्विधाकरणे—छेदयति ते दारु। ३२१. व्रण गात्रविचूर्णने—व्रणयति बाणेन वैरिणं भटः। ३२२. वर्ण वर्णक्रियाविस्तारगुणवचनेषु—वर्णयति पत्रं लिखतीत्यर्थः, वर्णयति वर्णं विस्तारयतीत्यर्थः, वर्णयति कविः स्तौतीत्यर्थः, गुणवचनं स्तवनमित्यर्थः। ३२३. पर्ण हरितभावे—पर्णयति प्रावृट् तरून्। ३२४-३२५. लाभ क्षप प्रेरणे—लाभयति-ते क्षपयति-ते वा क्षपां कथं कथमपि पथिकः। लाभ इति कश्चित् पठति लाभ आप्रवरणे क्षप प्रेरणे इति गणद्वयं पठति कश्चित्। ३२६. अघ पापकरणे—अघयति-ते लघुचेताः। ३२७. बहुलमेतन्निदर्शनम्। यदेतत् चुरादिषु अदन्तधातुनिदर्शनं तद्बहुलं वेदितव्यं उपलक्षणमित्यर्थः। अतोऽनुक्ता अपि धातव उद्भावनीयाः। तेन वस निवासे—वा( व, रमा)सयति आन्दोलयति ओजयति स्फुटयति ( अवधीरयति ) अवगुण्ठयति निवासविलोडनप्राणनप्रकाशनअवमननआवरणेषु प्रयोगा यथाभिधानं प्रयोज्याः, स्फटा स्फटित इत्यादयः। ३२८. इनङ् अङ्गनिरसनेऽपि। अङ्गवाचिनो लिङ्गात् निरसने धात्वर्थे इन् स च ङानुबन्धो विधायते। अतः कारितसंज्ञा न विहन्यते—हस्तौ निरस्यति हस्तयते पादयते भुजयते। निरसनेऽपीत्यपिशब्दस्य बह्वर्थत्वात् पुच्छमुत्क्षिपति उत्पुच्छयते गौः, पुच्छं परिक्षिपति परिपुच्छयते, भाण्डानि समाचिनोति संभाण्डयते वणिक्, चीवरं सम्मार्जयति परिदधाति वा सञ्चीवरयते भिक्षुरित्यादि यथाभिधानं। कारितव्यपदेशत्वात् कारितस्यानामिड्विकरणे इति लोपो भवत्येव हस्तयते पाद्यते। ३२९. श्वेताश्वाश्वतरगालोडितह्वरकाणामश्वतरेतकलोपश्च। चकारेण हि बहुलार्थः समुच्चीयते। अयमर्थः—एषामिनङ् भवति यथासंख्यं। अश्वतरइतकलोपश्च, ततो बहुलाधिकारात् आचष्टेऽतिकामतीत्यर्थे श्वेताश्वमाचष्टे श्वेतयते, अश्वतरमाचष्टे अश्वयते, गालोडितमाचष्टे गालोडयते, ह्वरकमाचष्टे ह्वरयते। बहुलत्वादिन्प्रत्यये श्वेताश्वमाचष्टे तेनातिकामति वा श्वेतयति अश्वयतीत्यादि। ३३०. मन्तुवन्तुविनां लुक् च। इह पुनरिनङ् न स्मर्यते। एतदन्तानां इन् एषां लुक् च ईशनमीट्

ईणमन्तमाचष्टे, ईशयति एवं गोमन्तमाचष्टे गवयति गवः गवौ गवा इत्यच् प्रत्ययः पचादित्वात्, स्रुग्वन्तमाचष्टे स्रुचयति, स्रग्विणमाचष्टे स्रजयति। ३३१. धातोस्तृशब्दस्यापि। धातोर्विहितस्य तृशब्दस्य लुग्भवति इति परे कर्तारमाचष्टे कारयति, एवं भवितारमाचष्टे भावयति। गणस्य इटः प्रत्ययनिबन्धस्य निवर्तयति धातुपारायणीय एव, गन्तारमाचष्टे गमयति ह्रस्वः पूर्ववत्। इदं सूत्रं क्वचित् पुस्तके पतितं लेखनभ्रमात् कैश्चिदिदं न मन्यते व्यवस्थितवास्मरणात् कारयतीत्यादि। ३३२. प्रशस्यस्य श्रः—श्रापयति। ३३३. वृद्धस्य च ज्यः—ज्यापयति। ३३४. अन्तिकबाढयोर्नेदसाधौ—नेदयति, साधयति। ३३५. युवाल्पयोः कन् वा—युवानं आचष्टे अल्पं वा कनयति युवयति अल्पयति वा। ३३६. स्थूलदूरयुवक्षिप्रक्षुद्राणामन्तस्थादेर्लोपो गुणश्च—स्थवयति दवयति यवयति क्षेपयति क्षोदयति। ३३७. बहोर्यादिर्भूश्च—भूययति। ३३८. प्रियस्थिरस्फिरोरुगुरुबहुलतृप्रदीर्घह्रस्ववृद्धवृन्दारकाणां प्रस्थस्फवरगरबंहत्रपद्राघह्रसवर्षवृन्दाः—प्रापयति स्थापयति स्फापयति वरयति गरयति बंहयति त्रपयति द्राघयति ह्रसयति वर्षयति वृन्दयति। स्फिरतृप्रशब्दौ विस्तीर्णकृच्छ्रयोर्यथायोगं वर्तेते। ३३९. तद्वदिष्ठेमेयःसु बहुलं। इन्वदित्यर्थः पटिष्ठः पटिमा पटीयान्। ३४०. सत्यार्थवेदानामन्त क्षाप् तु कारित एव। सत्यादीनामन्त आप आगमो भवति कारित एव न त्विष्ठादिषु, सत्यापयति अर्थापयति वेदापयति। ३४१. एकस्वराणामादन्तानां च। एकस्वराणां आकारान्तानां लिङ्गानां कारित एव आबागमो भवति—श्रापयति। एतानि गणसूत्राणि। इति गणवृत्तौ स्वार्थेनन्ताश्चुरादयः समाप्ताः * ॥

(४) स्फुडीति पञ्चमस्वरस्त्वनार्ष इति गोविन्दभट्टः। (६) गुन्द्रा इति सिद्धार्थं कवर्गतृतीयादिरयमिति पारायणीया इति गोविन्दभट्टः। (१५) प्रतियत्ने इत्येके। (१८) बलप्राणधारणयोरिति गोविन्दभट्टः। (२२-२३) पुट चुट इति रामः। (२५-२७) षट इति रामः षाटयति, सुट्टयति दन्त्योपदेशोऽयमिति

* यतो मगीन्द्रं रसयुग्मभागी विग्रन्मगः सौम्यदिने व्यलिखीत्। युग्मचपानायगिरीन्दुशाके। (१७१२) श्रीरामभद्रो गणवृत्तिग्रन्थं। आदर्शदोषाद्गशुद्धिरवद्या।

भौम:। (३२) अयं हिंसायामेवेत्येके। (३७) श्वल इति गोविन्दभट्ट:। (५५) कुस्त इत्येके। (६०) प्रथ प्रक्षेपणे। पकारो रेफयुक्त इति राम: प्रार्थयति ऋकारयुक्त इति विलोचनादय:। (६२) बुल निमज्जने। पवर्गीयबकारादिरिति वोपदेव: संक्षिप्तसारमतानुसारी तु तालव्यवर्गप्रथमादिमाह एतत्पक्षे उच्छ्रायेऽप्ययमिति बहव:। (६४) ह्रस्वोपधोऽयमिति नन्दी। (६७) मूर्धन्योपदेशोऽयमिति केचित्। (७८) दन्त्यान्तोऽयमिति वोपदेव: रुष इत्येके। (८०) शुल्व शम्ब वृंहि वर्हवत्तय इति वकारप्रकरणे अन्तस्थ-तृतीयादिरधोवकार: शुल्वं रज्जुरिति गोविन्दभट्टविवरणं च। (८४) अतःनन्तरं स्यम वितर्के स्यामयति रामस्तु परस्मैपदार्थमिममिहाधीते। (८५) व्यय क्षेपे। अन्तस्थान्तवकारादि अन्तस्थप्रथमान्तोऽयमिति गोविन्दभट्टकौशिकौ ओष्ठ्यवर्गप्रथमान्त इत्येके। तवर्गचतुर्थादिरित्यनाकर एव। (९३) महिषधूसरित: सरितस्तट इति जानकीहरणं। (९६) नास्ति रमानाथे। (१०२-१०३) प्रेरणे इति भौम:, प्रेषणे इति वृद्धा:। वर्ण इत्यन्ये—वर्णयति। (१०५) घृ प्रस्रवणे इत्येके घारयति घृतं। (११५) चुडि छेदने। चुटि इत्येके। (१२०) तालव्यादिरयमिति वर्णदेशना। (१२२) दन्त्योष्ठ्यादिरिति दौर्गा:। तालव्यप्रथमादिरिति वोपदेव:। (१२५) रुट इत्यन्ये। अतःनन्तरं वटि विभजने। (१२६) मण्डयत्येव भूषायां हर्षे इति चुरादिर्नाथें भट्टमल्ल:। (१३१) रुज हिंसायामित्यपि केचित्। (१३६) किष्क इत्येके किष्कु:। (१३७) मूर्धन्यमध्य: सकेशा निष्केशा मक्षिण इति कविकल्पलताविरोध:। (१३९) राक्षसाश्चेतयन्ति न: इति भट्टो गणकृतानित्यत्वं। (१४०) संयतते (-दशते, मल्लिनाथ:) दंशयते सन्नाह इति भट्टमल्लमते दंशनमिह सन्नाह:। (१४१) कूण संकोचे। कूणि: ह्रस्वमध्योऽयमित्येके कोण:। (१४२-१४३) डभि डिभि इत्यपरे। (१४७) आकाङ्क्षायामिति भट्टमल्ल:। (१५२) दन्त्यादिरिति केचित्। (१५५) आभण्डनं निरूपणं उत्-क्षेपणमिति केचिदिति गोविन्दभट्ट:। (१५६) अप्रसन्नतायामित्यर्थ:, अप्रमाद इति च पाठ:। (१५७) प्रलम्भनं विसम्वादनं मिथ्याख्यानमिति वररुचि:। (१६२) चेतन इति पठित्वा चेतना संज्ञानमिति गोविन्दभट्ट:। (१७०) जम्भने इति पठित्वा जम्भनं गात्रशैथिल्यमिति गोविन्दभट्ट:। (१७१) वोपदेवेऽङ्को-कारार्थे तदा आश्रवणं तालव्यशं। (१७२) जसु। तुर्यस्वरानुबन्धोऽयमित्येके। (१७३) दन्त्यान्तोऽयमित्येके। (१७८) चकारात् सर्वे धातवश्चुरादौ पठ्यन्ते इति धातुपारायणं। तेन दृष्टे सूर्ये पुनरपि भवान् वाह-येदश्वशेषं इत्यादि। (१८९) प्रहसनं विप्लव इति गोविन्दभट्ट:। (१९१) निकार: खेद इति वोपदेव:, शाठ्यमिति राम:। इनौ विकल्पपक्षे यतितमिति दुर्घटवृत्ति:। (१९५) तालव्यवर्गप्रथमादिरयं। (१९६) अवकल्कनं चिन्तनं दम्भो वा विमिश्रीकरणमिति भौम:, तृणवद् भावयति द्विष: इति हलायुध:। (२०३) दधते वासयति च भण्डते धारणार्थका इति क्रियानिर्घण्टदर्शनात् धारण इति च पाठ:। (२१०-२४०) गुप अस्य षष्ठस्वरानुबन्धोऽनार्ष:। केचिद् जप व्यध धातुद्वयमिहाधीयते ताभ्यामिनन्ताभ्यामपि जाप: व्याध: एते भाषार्था वचनार्था इति पुरुषोत्तमशरणदेवौ। भासार्था दीप्त्यर्था इति धातुप्रदीपगोविन्दभट्टौ। (२५१-२५२) जीमूतानां स्तनयति गदयत्यपि गर्जित इति भट्टमल्ल:। (२५४) भीमसेनस्तु तालव्यान्तमाह। (२५५) स्वर आक्षेपे। दन्त्यसकारो वकारवान् विलोचनादयोऽपि सिस्वरयिषतीत्युदाहरन्ति, चतुर्भुजस्तु पञ्चमस्वरयुक्त-सकारं पठित्वा असुस्वरदित्युदाजहार प्रमाणं तु चिन्त्यं। (२६२) लक्ष्मतिरपि श्नथयति श्नथ इति विलोचनरामौ। (२६७) अयमपि डान्त इत्येके। (२७१) प्रक्षालयति पल्यूलयति शोधयतीत्यमौ इति क्रियानिर्घण्ट:,

